॥ श्रीः ॥

सगणेशवैभवाऽपरोक्षानुभूतिकः

# श्रीरामचरितामृतम्

नाम

## रामायणसारः

नेपालदेशीयमरासिन्युपनामक

दधिरामशर्मणा निर्मितः

संशोधितश्च

सोयं

नेपालदेशीय खिदिमग्रामनिवासिना

हरिहरशर्मणा प्रकाशितः

बी. एल. पावगी द्वारा

काश्यां रामघट्टे हितचिंतकनाम्नि

यंत्रालये मुद्रापितः

संवत् १९८५

श्रीगणेशाय नमः ॥

# प्रस्तावना ।



अतिरोहितमेतत्सेतुशीताचलमध्यवर्तिनां विदुषामार्याणाम्, यदस्मत्पूर्वजाः सनातनं धर्ममेव शिरोधार्यतयासंमानितवन्त इति, तेनैव धर्मेण न केवलं दृश्यमेव किंत्वदृश्यमपि सूक्ष्मतमं संसारं करामलकवद्गोचरीकृतवन्त इति च, स च धर्मो निखिलजगत्स्रष्टुरादिप्रजापतेः कालादारभ्याऽद्याऽवधि यथाकथंचिदविच्छिन्नेन रूपेण वर्तत एव, वर्त्स्यत्येवात उत्तरमपि येन केनचिदंशेन, सनातनत्वादस्य सर्वथातिरोभावस्तु दुर्घटतम एव, अस्यच धर्मस्य मूलं श्रुतिस्मृतिपुराणात्मकं शब्दमयं ब्रह्मैव नाऽन्यत्किंचित् तच्चाऽनादिसिद्धमेव, न केनचिन्निर्मितम् । तत्र तत्र महर्षीणां कर्तृत्वश्रुतिस्तु द्रष्टृत्वस्मर्तृत्वाऽभिप्रायकत्वादौपचारिकीति प्राचामाचार्य्याणां डिंडिमघोषः । एवं च वेदादीनामर्वाचीनत्वं कृत्रिमत्वं च वदंतः कतिपये शास्त्ररहस्यमजानाना भ्रान्ताएव वराकाः।धर्मश्चाऽयं प्रकारबाहुल्यादतीवसूक्ष्मधियां वेद्योयद्यपिनस्थूलधियां तथाऽपि येन केनाऽपि प्रकारेण श्रद्धाभक्तिभ्यां गुरुकृपाभाजनैः स्थूलधीभिरप्यनुष्ठीयमानोमहते फलाय कल्पत एव, अत्र च "स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्" इति भगवदुक्तिरेव प्रमाणशिरोमणित्वेन वरीवर्त्ति । सर्वेषां प्रकाराणां चमध्येऽनायाससाध्यत्वाद्देशकालद्रव्यसहायान्तराऽऽदिनिरपेक्षत्वात्, हिंसाऽऽदिदोषराहित्येन प्राणिनामनुद्वेजकत्वान्महाफलत्वात्सर्ववर्णाऽऽश्रमसाधारणत्वाच्च भगवन्नामसंकीर्तनरूपः प्रकारः सर्वोत्तमत्वेन

संमतः प्राचीनानामर्वाचीनानां च वैदिकधर्माऽवलम्बिनां सर्वेषामेव विदुषाम्, को नाम पुरुषार्थो भगवन्नामसंकीर्तनपराणां दुष्प्रापो भवेदिति। अनेन च शिशुना शैशव एवेदं निजगुरुमुखाऽरविंदतो गृहीत्वा हृदये गोपितमासीत्, अथ कियता कालेन श्रीगुरुचरणानां ( ब्रह्मचारिश्रीमोहदत्ताभिधयोगीश्वराणां ) कृपाकल्पवल्लीफलायितमेतत 'श्रीरामचरितामृतं' नाम स्वल्पतरं काव्यं हृत्कुहरादाविर्भूतं। एतच्च स्वस्यैव मनसः संतोषाय पुस्तकरूपतया परिणमय्य स्थापितमासीत। अधुना सतां दृग्गोचरतामननुभवन्ती कविता वृथेति विचारयन् प्रकाशयितुं गौतमोपनामकं हरिहरशर्माणं संप्रार्थ्य तदाज्ञया संशोध्य यथामति पुस्तकमिदं तस्मै समर्पितवानास्मि, तेन च काश्यां हितचिन्तकनाम्नि यंत्रालये मुद्रापयित्वा प्रकाशितम्, सोऽहं नितान्तनम्राशिरस्को विदुषां पादरजोमार्जनाकांक्षी सज्जनानभ्यर्थये क्षन्तव्यमिदं बालचापलमिति

नेपालदेशान्तर्गतखिदिमग्राम—
वास्तव्योमरालिम्बुपनामक—
दधिरामशर्मा

श्रीगणेशाय नमः ।

# अथ गणेशवैभवम् ।

गणेशपादाऽम्बुरुहद्वयेमनो-
मधुव्रतोऽद्यैव मया नियोज्यते ॥
यतः समस्तेन्द्रियगोचराऽभिधे
नयात्यसौ चम्पककानने गतिम् ॥ १ ॥
श्रुती मदीये व्यवहारगीःश्रुति-
श्रमादतिग्लानिमुपागते इमे ।
गिरीन्द्रकन्यातनुजन्मनः कथं
कथासुधाऽऽसारझरीं न धास्यतः ॥ २ ॥
विभावितं किं भवता न भामिनी-
प्रतीकतीक्ष्णत्वमयि त्वगिन्द्रिय ? ।
कुतः कुमाराऽनुजमन्दिरोदरे
न सेव्यते कोमलमश्मनां तलम् ॥ ३ ॥
भिदां गतायां बहुधा मुधा रते
दृशावुदर्कापदि रूपसंपदि ।
विवेकवृत्त्यैकरसे नयेऽनया
गजाऽऽननीयप्रतिमाऽवलोकने ॥ ४ ॥

त्वमाददानाऽपि रसने ! रसानिमान्
षडेव धत्से स्वरसज्ञतामदम् ।
अजानती नामरसं गणेशितु-
रसज्ञतेयं वद कीदृशी तव ॥ ५ ॥

न नासिके ! निष्फलयाऽऽत्मनो जनु-
र्वृथैव गंधग्रहणाऽभिमानिनी ।
इभाऽऽस्यपादार्पितसूनसौरभं
भजस्व भूयो भवभंगदाऽगदम् ॥ ६ ॥

पराऽपवादाऽवटकोटरे चिरं
हठाल्लुठन्ती किल पंकिलाऽसि वाक् !
अथैकदन्तस्य कथैकवारिधिं
वगाहमानैव विशुद्धिमाप्नुहि ॥ ७ ॥

करौ ! वरौ केवलमौदरीं दरीं
क्रियाकरौ पूरयितुं न वै युवाम् ।
भवाऽत्मजस्याऽऽलयमार्जनादिकं
स्वमाचरन्तौ चरितार्थयिष्यथः ॥ ८ ॥

मुधा मदंघ्री गमनादरादमू
उपेयिवांसौ सुषमादरिद्रताम् ।
इतः परं तीर्थधरापरिभ्रमै-
रितां परां मंजुलतां महेशितुः ॥ ९ ॥

अहो ! अनाख्येय ! कदिन्द्रियद्वय !
त्वयाऽऽस्यतां मौनमवाङ्मुखेन तु ।
तथाहि नीचत्वजुषां प्रभोः पुरः
पुरस्क्रिया मूकतयैव सिद्ध्यति ॥ १० ॥

शिरश्चिशङ्कीकृतलोलताऽर्जितां
घनीभवन्तीं धनिषु प्रणम्रताम् ।
जहज्जगद्धर्तुरजाऽङ्गजन्मनः
सृजत्वजर्यं चरणाऽम्बुजन्मना ॥ ११ ॥

नितांततांतो भवजीर्णकानने
भ्रमेण रागद्विषिदावतापिते ।
निमज्ज मज्जीव ! परिश्रमाऽपहे
गजाऽऽस्यरूपामृतनीरधौ चिरम् ॥ १२ ॥

तनुः प्रमेयाऽध्यवसाय एव ते
न रूपमेवाऽस्ति तवाऽन्यथा मते ! ॥
प्रमेयमेकं भवसूनुवैभवं
नितांतनष्टा तदजानती भवेः ॥ १३ ॥

निशम्यतां काय ! मदीयवागियं
हितं तवैवेदमये ! मयेर्यते ।
उपाय एकोऽपि न ते विलोक्यते
पुरः प्रभोर्यष्टिनिपातितां विना ॥ १४ ॥

चिरादहंकारपिशाचक ! त्वया
भवान्तरेऽत्रापि पुरा भ्रमाम्यहम् ।
विनायकाऽऽख्यामनुना निराकृतो
विदापनायै न भवानवाऽऽप्यते ॥ १५ ॥

म्रियस्व हास्यं न यथार्थमुच्यते
घृणां वहेदाननतोऽपि काम ! ते ।
उमाऽऽत्मजः स्वामिभिरादृतेतरा-
न्न जीवनात्कष्टतरं परं भवेत् ॥ १६ ॥

इदं शृणु क्रोध !मदीयभाषितं
शनैः पलायस्व यतस्व सत्वरम् ।
तवाऽपराधस्य परंपरां परां
न कोऽपि जगत्प्रभवे प्रभाषते ॥ १७ ॥

इयन्तमासीस्त्वमनेहसं सखे !
सुखं महाराजवदन्तरे मम ।
इतः परं तत्र शिवाऽऽत्मजे स्थिते !
स्थितिर्भवेत्क्वेव वराक ! लोभ ! ते ॥१८॥

जडत्वमध्यापयता विना भृतिं
चिरं कृता मोह ! सहाऽऽसिका त्वया ।
पलायमानाय गजाऽऽस्यतोभिया
मयाऽद्य बद्धोगुरवेऽयमञ्जलिः ॥ १९ ॥

मदस्थितिं वीक्ष्य गजाऽऽस्यगंडयो-
र्मदस्थितिं ते सृजतो हि मास्मभूत् ।
मद ? स्थितावुद्यमनं, सनामता
न सर्वतः सख्यविधिप्रयोजिका ॥ २० ॥

पुरा हि मात्सर्य ! निजां भयंकरां
मुहुर्मुहुर्दर्शयसि स्मयेन याम् ।
मयि प्रपन्ने शरणं गणेश्वरं
भणाऽद्य सा ते क्व गता बलिष्ठता ॥ २१ ॥

स्वच्छन्दं विचरत यूयमद्य सर्वे
मत्प्राणा ! भवति न मे भवद्भिरर्थः ।
कल्पन्ते ह्यपचितये न केचनाऽपि
व्यापाराः खलु भवतां भवाऽऽत्मजस्य ॥ २२ ॥

चित्ते शंभुसुतस्य पादकमलध्यानैकताने मम
प्राणा ! स्तद्वशवर्तिनां हि भवतां रोधश्रमं नाऽऽरभे ।
आलम्बे वशमागते पुनरहो ! काऽऽलम्बितानांकथा
ह्याकृष्टे लकुटे भवेत्सर्वमिहाऽऽकृष्टैव पूपाऽऽवली ॥ २३ ॥

अस्मानेवाऽनुजीवज्जयति बत वयं नाऽनुर्जीवेमचैत-
च्चेतश्चेत्याग्रहश्चेद्भवत वचसि मे वायवः ! साऽव-
धानाः । दास्यं द्वैमातुरस्याऽनुसरति सततं चित्तमेतन्म-
दीयं यौष्माकीणं पुनःकोहरतु तदनुजीव्यत्वमास्तां

चिराय ॥ २४ ॥ अन्योऽन्याऽऽश्रयतैव चित्तभवतोर्जागर्ति वस्तुस्थितेस्तत्रैकस्यजये परस्य विजयोहीषत्करो मारुत ! । चेतोमे सुहृदीश्वराऽऽत्मजपदांऽभोजाऽऽसवाऽऽस्वादनान्नाऽन्यत्कांक्षति किंचनाऽपि चरतु स्वैरं भवान्कांक्षतिः ॥ २५ ॥ वायो ! कायतरावनेकविवरे चेतोमणिस्त्वं फणी व्यापारैरिह पंचभिः कवलयञ्जीवाखुमास्थैः स्थितः ॥ सद्योजांगुलिकेन संप्रति हठादाकृष्यमाणे मणावस्मिन्मूषकवाहनेन भवतः शक्तया कया भूयते ॥२६॥ स्यादेतच्चित्तवाताऽऽश्रयकलहकथोल्लेखनं ह्यप्रसक्तंप्रस्तावाऽऽपन्नमीशाऽङ्गजगजवदनप्रार्थनं सांप्रतं मे ॥ उक्तैषामिंद्रियाणां यदपि गणपते ! लालनाभर्त्सनाद्यैः शिक्षा साक्षान्नहेयस्तदपि तव कृपामन्तरा तुस्वभावः ॥ २७ ॥ आकीटादा विरिंचेर्निखिलजनिजुषोविघ्ननाथ ! त्वदाज्ञानिघ्नीभूयंभजन्तःकिमपि विदधते नस्वकीयेच्छयैते ॥ विद्वच्चेतःसहाया निगमगणशिरोभारतीयंसतीचेत्तर्हीमानींद्रियाणि प्रकृतिनियमने स्युःकथं शक्तिभाञ्जि ॥ २८ ॥ विघ्नाधीश ! त्वमेव त्वभिलषितफलाऽऽवाप्तये मर्त्यलोकैराराध्यानांसुराणां सततमजहतं प्रष्ठभावं बिभर्षि ॥ एतज्ज्ञात्वैव नान्याऽऽदरमनुसरता

पात्यतेऽयंमयाऽऽत्मा त्वत्पादांऽभोजयुग्मे मम पुनरु-
चितं यत्त्वया तद्विधेयम् ॥ २९ ॥ मूलं वीची-
चयानामिव सलिलनिधिं जन्मभाजां भवन्तं जाना-
नानां जनानां जगदिदमखिलं त्वन्मयं नैव नाना ।
प्रत्यत्तं बाधतेहि श्रुतिमिति कुटिलो मानवानां नवानां
तर्कोऽयंकर्कशत्वं दधदतिमृदुलां शेमुषीं हन्त !
हन्ति ॥ ३० ॥ स्वाऽभीष्टप्रार्थिसर्वाऽमरनिवहनमन्म-
स्तंकोत्तंसमीलद्रत्नच्छायाऽङ्कुरश्रीशबलनसबलद्दैत-
मारक्तिमानम् । पादांभोजे वहन्ती भवसुत !
भवतश्चेतसा भावयन्तः प्राञ्चोभूयो भवाऽन्तर्भ्रमणभव-
परिश्रान्तिर्विश्रान्तिमापुः ॥ ३१ ॥

इति श्रीगणेशवैभवमिंद्रियगर्वकूलंकषंदधिरामीयम् ॥



श्रीगणेशायनमः ।

# अथाऽपरोक्षानुभूतिः ।

एकस्मै हरिनाम्ने पर्याप्तं वै न यज्ञगज्ञालम् ॥
तेनाऽयं मनुजन्मा बद्धोमन्भामसं दहति ॥ १ ॥
हरमूर्तिं हरसूनुं हरचटुलाक्षीमथोहराऽऽत्मानम् ॥
भक्त्या वन्दे श्रीहरमप्येकं पञ्चधा भूतम् ॥ २ ॥

दृश्यव्यापारपारप्रशमसमरसान्निस्तरङ्गेऽन्तरङ्गे निश्वासोच्छ्वासवेगोपरमणमसुषु प्राप्तवत्स्वञ्जसैव ॥ नासाऽग्रं भ्रून्तरालं निटिलमथ पुनर्ब्रह्मणोरंध्रमन्ते पश्यन्त्यां निर्निमेषं दृशि च विजयते जाग्रदद्वैतबोधः ॥ ३ ॥ मिथ्यात्वे पुष्टिमायात्यनुदिनमननाऽभ्यासयोगस्य पाकाद्धास्यानां, वासनानां बलवति च निरालंबनत्वे निरूढे ॥ तन्मूलेचेन्द्रियाणां तदनु परिदृढे लीयमाने कुतोऽपिस्वान्ते, व्यापारहीनेष्वसुषु विजयते काऽपि निर्वासना चित् ॥ ४ ॥ चित्ते चेत्योन्मुखत्वं विजहति भगवन्नामजापप्रभावाद्भावाऽभावानशेषान्कवलयति सति ब्रह्मणि स्वेन धाम्ना ॥ निर्व्यापारेऽक्षवृन्दे गतवति विलयं क्वाऽप्यहंकारयन्त्रे निःसीमा निर्विकारा जयति निरुपमा सच्चिदात्माऽनु-

भूतिः ॥ ५ ॥ एकांतैकांतभूमीधरवरतनुजाकांत-पादाऽम्बुजन्मद्वंद्वध्यांनाऽनुरागाऽमृतरसजलधौ मज्ज-नाऽऽनंदभाजि। पुत्रं मित्रं कलत्रं स्मरति न किमपि क्वाऽपि किंच प्रयाते चित्ते निर्वातदीपोपमितिमनु-गता भाति चित्काचिदेका ॥ ६ ॥ अभ्यासाद्रा-मनाम्नोऽनवरतममिते पातकौघे विनष्टे चित्ते सौख्या-ऽनुकूलां मृगयति पदवीं शांतिमत्स्विद्रियेषु ॥ हृन्नाड्यामुच्चलन्त्यां सुखपरवशतोयाति वाते तदूर्ध्वं कण्ठान्ते भ्रून्तराले शिरसि विजयते निर्विकारा चिदेका ॥ ७ ॥ ऋज्वीमाराध्य शैलीमसदुदरदरीगर्त-संपूर्तिहेतोर्भिन्नाऽभिप्रायकत्वं व्यवहृतिषु जहच्चेतसो वागिरोवा ॥ गायेन्नामानि विष्णोरविरतमिह यस्तस्य चित्ते प्रविष्टे मूर्ध्नोरंध्रं सहैवाऽसुभिरतिविमले भाति चित्काचिदेका ॥ ८ ॥

॥ इत्यपरोक्षानुभूतिर्दधिरामशर्मणः ॥

---

श्रीगणेशायनमः ।

# श्रीरामचरितामृतंकाव्यम् ।

ओं यत्सत्त्वेनाऽसदपि निखिलं सद्वदाभाति विश्वं
नामैवाऽलं स्मृतमपि सकृच्छेत्तुमंहांसि यस्य ॥
नानारूपैरवतरति यः पालकः साधुसंघं
तं श्रीरामं हृदयनिलयं चेतसा भावयामः ॥ १ ॥
प्राचीनानां वचनसरणेर्दूरभिन्नं कवीनां
रामस्याऽहं चरितमधुना वक्तुकामोनिकामम् ॥
हास्यायस्यामहह !! तदपि स्वान्तमेतन्न यत्ना-
दप्याक्रष्टुं किमिह विदधे शक्यते तत्र लग्नम् ॥ २ ॥
वेगादग्रे सरति बहुधा भारती मे नियन्तुं
शब्दाऽर्थानां गुणपरिचयाऽभाव एकांतपुष्टः ॥
अंतर्धत्ते गुणसमुदयं तावकी भक्तिरेके-
त्येका तृष्णा मुखरयति मां रामचंद्र ! त्वदग्रे ॥ ३ ॥
श्रीमानाद्यः स किल पुरुषोराघवे ह्यन्ववाये
प्रादुर्भूतोऽधिमहि चतुरो मूर्त्तिभेदान्विधाय ॥
यस्मिन्नन्तर्भवति निखिलो जागतोऽयं प्रपञ्चो
यस्याऽमूर्तेरपि सुरहिता मूर्तयः स्वेच्छयैव ॥ ४ ॥

मेघश्यामः प्रथमगुणभूः प्रीतिपात्रं प्रजानां
रामोनाम प्रथममभवद्भूरिभाग्येन भूमेः ॥
कौसल्यायां दशरथनृपश्रेष्ठपत्न्यामजस्य
प्रादुर्भावः सुरमुनिकृतप्रार्थनादेव यस्य ॥ ५ ॥
कैकेयीतस्तदनु भरतोभारतीनां प्रजानां
भाग्येनैवाऽजनि शुभरतोभानुवंशप्रदीपः ॥
येनोन्नीतं पुनरिह महामोहनामाऽब्धिमग्नं
मूलाऽज्ञानप्रबलतमसोबाधकं भक्तिरत्नम् ॥ ६ ॥
राज्ञः पत्न्यां पृथुकयुगलं श्रीसुमित्राऽभिधाया-
मङ्के बिभ्रत्कनकसुषमां प्रादुरासीन्मनोज्ञम् ॥
रामच्छायामनुविदधतं लक्ष्मणं प्राहुरेकं
शत्रुघ्नाऽऽख्यं भरतनिरतं तत्र चाऽन्यं पुराणाः ॥७॥
चत्वारोऽपि प्रकृतिसुभगाः साधुमातापितॄणा-
मातन्वाना मुदमतितमां बाललीलाविशेषैः ॥
कंचित्कालं स्फुरदवयवा यापयाञ्चक्रिरे ते
मूर्त्ताः साक्षादिव रुरुचिरे किंच राज्ञः पुमर्थाः ॥८॥
ते संस्कारान्विधिवदुचितान्ब्रह्मसूनुप्रयुक्ता-
न्प्राप्याऽत्यन्तं रघुकुलमणेः सूनवः संविरेजुः ॥
उद्यद्रोचिःपटलजटिलाः पूर्वमेवाऽतिकान्ताः
शाणोल्लीढाः किमुत मणयः सुप्रसिद्धाऽऽकरोत्थाः ॥९॥

सर्वे सर्वैरपि कुलगुणैर्निर्विशेषं विशिष्टा
न्यूनाऽऽधिक्ये स्म न गुणकृते कश्चिदीष्टे विवेक्तुम् ।
प्रीतिस्त्वेका समधिकतमा राम एव प्रजानां
स्वाभाव्येनाऽनवधि ववृधे दुर्जयो हि स्वभावः ॥१०॥
यज्ञघ्नानां वधमभिलषन्नेकदा राक्षसानां
विश्वामित्रः क्षितिपतिमथाऽभ्येत्य रामं ययाचे ॥
प्रादाद्भूपः स मुनिवचसो गौरवात्साऽनुजं तं
बाह्याः प्राणाः स किल नृपतेः पुत्रमात्रं न रामः ॥११॥
श्यामोधन्वी कनकरुचिना साकमर्कप्रकाशं
गच्छन्नन्वक्तमनुजनुषा कौशिकं राजपुत्रः ॥
व्यद्योतिष्ट प्रचलचपलः शक्रचापं दधानो
भानोरर्वाक् स्थित इव तदा प्रावृषेण्योऽम्बुवाहः ॥१२॥
विद्ये रामं तदनुजमपि क्षुत्पिपासाऽऽदिहीना-
वातन्वाने कुशिकतनयप्रापिते वर्त्मनि द्वे ।
संबिभ्राणौ सहजमतुलं क्षुत्पिपासाद्यऽऽभावं
प्राऽपद्येतां नखलु न पुनर्भाषितं नाम दोषम् ॥१३॥
मुन्यादेशात्कंचन धनुषोरामभद्रेण मौर्व्या-
माकृष्टायामुपगतवती ताटका यातुधानी ॥
तस्यैवेषुं रुधिरमुरसः पाययित्वा ह्यपूर्वं
देवैश्वर्यं कथयितुमिव द्रागुपेता कृतान्तम् ॥ १४ ॥

प्राप्य प्रीतान्मुनिकुलगुरोः कर्मणा तेन सर्वं
शस्त्रग्रामं दनुजदमनं मंत्रपूर्वं स रामः ॥
दुर्धर्षोऽभूदधिकमरिभिः पूर्वमेवाऽविषह्यः
कच्चे दीप्तः किमुत मरुता संगतोहव्यवाहः ॥१५॥
भूयः सिद्धाऽऽश्रममुपगतौ रामरामाऽनुजौ तौ
प्रापद्येतां मुनिकुलकृतामर्हणामर्हणीयौ ॥
दृष्ट्वा मूर्ती सपदि च तयोश्चित्तमाल्हादयन्त्यौ
तेऽपि प्रापुः सजलनयनास्तापसास्तापशांतिम् ॥१६॥
दीक्षां याते मुनिकुलपतौ राक्षसानामधीशा-
वालोक्य द्वौ सह मखविधिं लोपयन्तावनीकैः ॥
रामे दृष्टिर्भयविलुलिता तापसैराहिता तै-
रौदार्याऽऽव्या धनुषि सशरे रामचंद्रेण धीरम् ॥१७॥
चापान्मुक्तौ रघुकुलमणेः कर्णपर्यंतकृष्टा-
द्बाणावेकं सरिदधिपतौ राक्षसेन्द्रं सजीवम् ॥
जीवाऽपेतं युगपदवनौ चाऽपरं राममूर्ध्नि
व्योम्नः पुष्पाऽऽवलिमविशतां पातयित्वा निषंगे॥१८॥
रामभ्रातुर्विशिखदहने तत्र शिष्टोऽप्यशेषं
लेभे तूर्णं सहि शलभतां राक्षसानां समूहः ॥
साऽऽशीर्वादं मुनिवरकृताऽऽलिङ्गनं राजसूनू
तौ लेभाते मुदमतितमां तापसा लेभिरे ते ॥१९॥

राज्ञा यज्ञे निमिकुलभुवाऽऽमंत्रितः कौशिकोऽसौ
गच्छन्नीत्वा सह नृपसुतावभ्यगच्छद्विदेहान् ॥
मार्गे रामोमुनिमनुसरन्पादपाथोजधूल्या
विप्रस्त्रीतां सुदृढमुपलं कंचिदेकं निनाय ॥२०॥
रामं नावा त्रिदशतटिनीं नाविकः संतितीर्षुं
प्रोवाच, त्वच्चरणरजसा नौरपि स्त्री यदि स्यात् ॥
नाऽन्याऽऽजीवः कथमिदमहं पालयेयं कुटुम्बं-
मा दाः पण्यं रघुवर ! परं क्षालयामि त्वदंघ्री ॥२१॥
प्राप्ताऽनुज्ञः स च रघुवरात्प्रीतिभाजस्तदुक्त्या
प्रक्षाल्यांऽघ्री शिरसि तदपो धार्य्यं, स्तारयित्वा ॥
आत्मानं प्राग्भवजलनिधेर्दुस्तरात्पूर्वजैः स्वैः
सार्धं, स्नेहादथसुरधुनिं तारयामास रामम् ॥ २२ ॥
आलोक्यैतौ मरकतशिलास्वर्णकांती कुमारौ
तौ सर्वस्माद्विषयनिवहाद्देहपूर्वान्निवृत्तः ॥
तर्ह्येवाहो !! स किल जनकः सत्यमासीद्विदेहः
पूर्वं सा तु व्यवहृतिरभूद्भावियोगेन नूनम् ॥२३॥
हर्षं राज्ञो हृदि समुदितं रामसंदर्शनेन
प्रौढा पुत्रीपरिणयपणप्रत्यभिज्ञान्यगालीत् ॥
भूयोलोकोत्तरमहिमतत्तेजसाऽऽक्रांतवीर्या
निःसृत्यांऽते बलवदगिलत्सोऽपि तामेव सद्यः ॥२४॥

एतौ चेतुं पथि सुमनसः पुष्पवाटीं व्रजन्तौ
लोकाऽतीतं किमपि दधतौ धाम लावण्यशोभि ॥
दृष्ट्वाऽन्योऽन्यं निजगदुरिदं संगताः पौरवध्वः
"कौ नामैतावयि सखि ! समाकर्षकौ चेतसोनः॥२५॥
एकः कांत्या हरति सुषमामिन्द्रनीलस्य सर्वा-
मन्यश्छायां श्रयति वपुषा कांचनीं कांचनाऽपि ॥
पीनोरस्कौ सखि ! पुन श्चौ पद्मपत्राऽऽयताक्षौ
धिक्कुर्वंतौ निजमुखरुचा कोटिशकेंदुशोभाम् ॥२६॥
ये मन्यन्ते जगति मदनं रूपवत्सु प्रधानं
स्वप्नेऽपीमौ सकृदपि न तैर्हन्त !! दृष्टौ वराकैः ।
तिष्ठत्वेको विषमविशिखः कोटिकन्दर्पशोभा-
पुंजोऽपीयाद्दतिमलिनतामेनयोरग्रतस्तु ॥ २७ ॥
सृष्टचंतःस्थौ नखलु जगतां स्रष्टुरेताववश्यं
तस्य क्वेदृग्विधिनिपुणताऽऽलोकिता वा श्रुता वा ॥
प्रादुर्भूतौ सखि ! नरवरौ स्वेच्छयैवाऽद्वितीयौ
चेतोवृत्तिर्मम पुनरिदं निर्मला निश्चिनोति ॥२८॥
श्यामोयोऽसौ स पुनरतुलां कांतिपीयूषधारां
वर्षन् दृष्ट्योः सखि ! निजवशं मानसं नस्तनोति ॥
पादौ शोणाऽम्बुजरुचिहरावालि ! पश्यैतदीयौ
यौ मुक्तानां श्रयति नखरच्छद्मना राजिरेषा ॥२९॥

आलम्बेते परिघसदृशौ जानुपर्यंतमेतौ
बाहू, नासा तिलसुमसमा, विद्रुमाऽऽभौ तथौष्ठौ ॥
दंतश्रेणी जयति रुचिरा दाडिमीबीजपूज्या
नीलस्निग्धं कुटिलितमुखं मूर्धजानां कदम्बम् ॥३०॥
नाभी चैषा तपनतनयाऽऽवर्तगंभीरशोभा
तप्तस्वर्णच्छवि निवसनं भाति कट्यां मनोज्ञम् ॥
मीनाऽऽकारे सखि ! मणिमये कुंडले कर्णयोर्द्वे
भास्वत्कोटिद्युति च मुकुटं मूर्ध्नि विभ्राजतेऽस्य ॥३१॥
माला राजत्युरसि विशदस्थूलमुक्ताफलानां
सत्काश्मीरद्रवविरचितं चोर्ध्वपुंड्रं ललाटे ॥
प्रत्यङ्गं सा लसति सुषमा काऽप्यचिंत्या वयस्ये !
यामाख्यातुं दशशतमुखः स्यात्फणीशोऽप्यनीशः॥३२॥
योऽभूत्कालादिह निरवधेः सोऽयमस्माकमन्त-
स्तापः सर्वोव्रजति विलयं दर्शनादेव चाऽस्य ॥
एकः खेदो हृदयमसकृद्बाधतेऽयं परंतु
ज्ञातुं शक्ता नहि वयमदोनामजात्यादिकं यत्॥३३॥
यः कोऽपिस्याज्जनकदुहितुर्दिव्यलावण्यमूर्तेः
पाणिग्राहं कलयितुमसावेव योग्योमतोमे ॥
सौदामिन्या जलमुच इव प्रेक्षणीयोनिकामं
सोऽयं सख्यः ! कथमपि भवेदस्य तस्याश्च योगः॥३३॥

राजा किंतु त्यजतु न हठं नाऽयमुत्तोलयेद्वा
शंभोश्चापं गिरिगुरुतरं वारिजातकोमलाङ्गः ॥
दूरादेव क्षणमिह वयं युक्त्युपायैर्विहीना
भिन्नानेतान्सखि ! बहुमनोमोदकान्भक्षयामः ॥३५॥
नाऽसंभाव्यं जगति किमपि, श्रीपतेः किंच लीला
दुर्विज्ञेया, नरपतिरसौ भक्तिमान्कैटभाऽरेः ॥
अस्मद्वांछां स शशिमुकुटः पूरयिष्यत्यवश्यं,
यातावेतौ, वयमपि गृहान्याम जातो विलम्बः,, ॥३६॥
स्वीकृत्याऽर्चां जनकविहितां राघवाभ्यां समेतो
विश्वामित्रः स समयसमां मैथिलं वाचमूचे ॥
'द्रष्टुं राजन् ! समभिलषतः शांभवं चापमेता-
विष्टादातुं तव किल सुता यद्गुणाऽऽकर्षकाय, ॥३७॥
श्रुत्वा वाक्यं लघुतरमृषेः स स्वकीयान्प्रहर्षा-
दानेतव्यं धनुरिति भटानादिदेशाऽवनीन्द्रः ॥
गत्वाऽऽनीतं बहुभिरथ तैरैश्वरं कार्मुकं त-
द्दिव्यं तेजोर्दधदुरुघनैर्देवराजाऽऽयुधं वा ॥३८॥
अग्रे राज्ञामथ परिकरं चापसंदत्तदृष्टि-
र्बध्नन्रेजे रघुकुलमणिर्ज्ञातवैदेहसंधः ॥
संत्रस्तानामिवदिविषदां वर्त्तमानः पुरस्ता-
द्भूयोऽप्यैन्यत्रिपुरदहने यत्नवानष्टमूर्त्तिः ॥३९॥

आदायैशं धनुरवततां शिंजिनीं संविधास्य-
न्यावत्किंचिन्नमयति पुरः पार्थिवानां स रामः ॥
तावच्चण्डाऽऽरववधिरितब्रह्मगोलाऽन्तरस्थ-
प्राणिव्रातं ध्वनदगकुलं कार्मुकं भज्यते स्म ॥४०॥
प्रापाऽऽनन्दं तदनु जनकोभारतीवृत्त्यतीतं
रामः सीताकरकमलतः स्वर्णमाणिक्यमालाम् ॥
वार्त्ताहर्त्तुः श्रुतसुतमहः सोत्सवान्कोसलायाः
सैन्याऽमात्यैः कतिपयदिनैःकोसलेन्द्रोविदेहान् ॥४१॥
तावन्योऽन्यं रघुनिमिकुलाम्भोजभानू समेतौ
भूयः पूतावपि विदधतुः पूतमात्मानमेव ॥
आक्रान्ताऽङ्कः सततमृषिभिर्मृग्यमाणोऽङ्घ्रिणैको
भोगे योगं मतिविलसितैः प्रोतवान्साङ्गमन्यः ॥४२॥
वृत्तोऽपूर्वोजनकभवने जानकीरामयोः स
त्रैलोक्यांऽतर्भवदसुभृदानन्दकन्दोविवाहः ॥
वेदा यत्र द्विजतनुधरा वैदिकाऽऽचारमूचुः
साक्षादूचे निजकुलविधिं राजवेशो विवस्वान् ॥४३॥
सर्वं कृत्वा समुचितविधिं रामचंद्राय पूर्वं
दत्ता सीता कनकसहिता प्रेमतोमैथिलेन ॥
तत्पाश्चात्या तदनु तनुजा लक्ष्मणायोर्मिलाख्या
भ्रातुः कन्ये भरतभरतप्रेमभाग्भ्यां सुरूपे ॥४४॥

वैदेहस्तं विपुलहरणेनाऽर्चितं कोसलेन्द्रं
प्राह प्रह्वः कियदिव मया पूर्णकामाय देयम् ॥
स्मर्त्तव्योऽहं नियतमिह ते दास इत्येव नित्यं
दृश्याश्चेमा नृप मम सुताः कन्यकानिर्विशेषम् ४५
वाचा मोचाफलमधुरया तं परीरंभरीत्या
प्रीत्या नीत्याऽपिच निखिलया भूरि संभावनेन ॥
काकुत्स्थोऽसौ निमिकुलमणिं संनिवर्त्याऽनुयांतं
हृष्टः पुत्रैः सह निववृते स्वां पुरीं दारवद्भिः ॥ ४६॥
कश्चिद्विप्रः पथि गुरुधनुर्भंगजक्रोधरक्ते
रामायाऽऽदौ भृगुकुलभवोदर्शयामास नेत्रे ॥
पश्चात्सर्वं स्वकृतसुकृतं तच्छरायाऽर्पयित्वा
पुण्यक्षेत्रे गतिमभिमतां पालयन्नेव यातः ॥४७॥
राजाऽपीत्थं फलितसुकृतः प्राप्य पुत्रैः सदारै-
र्निष्प्रत्यूहं स किल मुमुदे राजधानीमयोध्याम् ॥
कोवा विघ्नैरिह परिभवं यात्ययासीतत्रिलोक्यां
यास्यत्यग्रेऽप्यकपटमिमं रामचंद्रं प्रपन्नः ॥४८॥

इति श्रीरामचरितामृते दधिरामीये प्रथमः सर्गः ॥१॥

## द्वितीयः सर्गः

कालेऽतीते कियतिचिदथो रामचंद्राय राज्यं
तुर्याऽवस्थे धरणिरमणे नीतितोदातुकामे ॥

कैकेयी प्राग्वृतवरयुगच्छद्मजिह्लाढ्याऽऽढ्या
सद्योराज्ञः पवनगिलनोद्योगमाविश्चकार ॥१॥
तस्मिन्नामोत्सवनवविधावुद्यति द्योतिताऽऽशे
सद्वृन्दानामपि कुवलयोल्लासमातन्वति द्राक् ॥
तत्कैकेय्यांतम उदभवत्तूर्णमेकांतघोरं
नीतं येन प्रसभमखिलं वैपरीत्यं नितांतम् ॥२॥
ज्ञात्वाऽसाध्यं नरपतिरपि प्रौढमन्यैरुपायै-
स्तन्निर्बंधं मतिमसुपरित्याग एवाऽऽबबंध ॥
एकैवेयं प्रकृतिकठिना वागुरा दुर्जनानां
छेत्तुं हेतिः सरलमनसां यस्तदीयोऽनुरोधः ॥३॥
स्वेच्छाऽचारे रघुकुलभुवा सत्यविभ्रंशभीत्या
दत्ताऽनुज्ञा धरणिपतिना निर्भरक्रूरभावा ॥
रामायाऽदान्नव च शरदः पंच चाऽरण्यवासं
स्वच्छंदं सा स्वतनुजनुषोभूपतित्वं ववांछ ॥४॥
दैवैर्नुन्ना सुमतिमहरद्भारती कुब्जिकायाः,
सा कैकेय्या, गतमतिरियं रामराज्यं नृपाऽऽयुः ॥
एवं सर्वे समभिदधते किंतु तस्याश्च तस्या-
स्तस्यास्तेषामपि न दुरितं दुर्विधेरेव दोषः ॥५॥
रामोऽत्याक्षीत्स्वयमथपितुः संकटं वीक्ष्य राज्यं
प्राज्यं भूमेः परिभवदपि त्रैदशेशीं समृद्धिम् ॥

प्राणैः प्रेष्ठैरपि सुकृतिनः साधयन्त्यर्थमेके
मातापित्रोः किमुत नितरां भङ्गुरैरिन्द्रियार्थैः ॥६॥
तात ! प्रीत्या सुकृतमकृतं साम्प्रतं नो विधातु
रुष्टे दैवे बलवति बलं कस्य वा किं करोति ॥
पादांऽभोजद्वितयमनिशं राममित्यानमन्तं
राजा मामेत्यहह !! विकलोगाढमाश्लेष्टुमैच्छत ॥७॥
पाहि प्राणान्विरहविधुरान्वत्स ! राज्यं त्वदीयं
छद्मप्रायं नखलु वचनं वातुलानां प्रतीहि ॥
राज्ञीत्येवं विलपति महाक्रूरकर्मा नितांतं
किं वक्तव्यं बत हतविधीरामचन्द्रं निनाय ॥ ८ ॥
कौसल्याऽपि प्रथममवदद्वत्स ! मे जीवितं तु
त्वय्यायत्तं तदपि न पितुः सत्यमुत्सादनीयम् ॥
उत्कर्षः कोभवति भवतो राज्यलाभादपीत्थं
यांतं तूचे विकलहृदया 'राम ! मा मां जहीहि, ॥६॥
कामं त्यक्तः प्रतिभयवनं स व्रजन्राजलक्ष्म्या
पत्युश्छायां समनुसृतया धर्मपत्न्या न रामः ॥
कादाचित्की सततमटतोवल्लभा शीतभानो-
र्मार्गप्राप्ता किल कुमुदिनी शाश्वती कौमुदी तु ॥१०॥
रामस्नेहादगणितमहैश्वर्यसंपन्नसद्मा
सौमित्रिस्तौ जनकतनयाराघवावन्वयासीत् ॥

तावत्सर्वो विषयनिवहो बंधनं राघवीये
पादांऽभोजे मधुपसमतामेति चेतो न यावत् ॥११॥
राजा मोहादविदितवधूपुत्रकाऽरण्ययानो
हन्तोन्मीलन्नयनमुकुलो यर्हि नाऽचष्ट रामम् ॥
आपप्रच्छे स्खलितलपितो मंत्रिणं सन्निकृष्टं
'यान्ति प्राणा मम शृणु सखे! क्वाऽस्ति रामो मदीयः, ॥१२॥
भूयो भूपः सुतवनगमं चेष्टितैरेव तस्य
ज्ञात्वा ज्ञानी व्यलपदधिकं "जीवितेनेह किं मे ॥
प्राणा ! भारो भवति भवतां वेदनाः संह्रियन्तां
वज्रेण त्वं हृदय ! रचितं भिद्यसे यन्न सद्यः" ॥१३॥
श्वासान्दीर्घान्मुहुरथ महाशोकवैश्वानरोष्णा-
न्मुञ्चन्नूचे स किल सचिवं वाचमेकां ततन्वीम् ॥
तात ? त्वं तु व्रज रथयुतस्तानूथे स्थापयित्वा
व्यालोक्य्य त्वरितमटवीं मद्गिराऽऽनयेति ॥४॥
तां राजाऽऽज्ञां स नतशिरसा धारयन्नादरेण
प्राऽऽपन्मंत्री द्रुततरगतो रामचन्द्रोपकंठम् ॥
रामोऽप्येनं पितृसमधिकं भूरि संभाव्य सीता-
सौमित्रिभ्यां सह रथमथ क्षिप्रमेवाऽऽरुरोह ॥ १५ ॥
पौरास्तावत्समुपरुरुधुः सर्वतो वर्त्म सर्वे
यावद्रामो वदति सचिवं स्यन्दनं नोदयेति ॥

किंचप्रोचुः सजलनयना "जीवितुं शक्यते नो
हेशमाऽस्मानपि नय वनं त्वं निवर्त्तस्व यद्वा" ॥१६॥
युक्त्या तेषां रघुपरिवृढः सत्वरं युक्तिविद्वा-
नुन्मुक्तोऽभूदपि दृढतमात्प्रेमनाम्नः स पाशात् ॥
तेऽप्येकांतं हृदयकुहरे भावनाशृंखलाभि-
र्बध्वा चक्रुः पुनरितरतोगंतुमेनं ह्यशक्तम् ॥१७॥
संयोगेऽभूदपि समयतोदेशतोवस्तुतोवा
रामः प्रेमाऽऽस्पदमपि परिच्छिन्न एव प्रजानाम् ॥
सर्वं प्रेमाऽतिशयवशतोविप्रयोगे तु तासां
किं वा ब्रूमोबत जगदिदं राममात्रं बभूव ॥१८॥
गंगाकूले कृतवसतिना शिंशपावृक्षमूले
भिल्लाऽधीशः समगत गुहोराघवाणां वरेण ॥
तस्योत्पन्नोमनसि विपदं वीक्ष्य रामस्य खेद-
स्तत्त्वं गोप्यं निगदितवता लक्ष्मणेनाऽपनीतः ॥१९॥
तंप्राऽवोचद्दशरथसुतं प्रांजलिर्मंत्रिमुख्यो
गंतुं पारं त्रिदशसरितोनावमानाययन्तम् ॥
"व्यालोकय्य त्वरितमटवीं स्यन्दनेनाऽऽनयस्वे-
त्याज्ञां राज्ञः शिरसि धृतवानेष नाथाऽऽगतोऽस्मि॥२०॥
प्राऽभूदेषा वचनरचना मंत्रिणस्तस्य मार्गे
रामं रोद्धुं न खलु भवनच्छद्मबंधाद्विमुक्तम् ॥

भङ्क्त्वा वारीमिव मदबलादायसीं विद्रवन्तं
पादे लग्ना मृदुबिसलता मत्तमातंगराजम् ॥ २१ ॥
धृत्वा चीरं शिरसि च जटाजूटमाबध्य रामो
गंगां तीर्त्वा वनमभिययौ पश्यतोमंत्रिणस्तु ॥
याता सीता तमनु गतवाँल्लक्ष्मणस्तां च तेषु
त्वत्याक्रांतेष्वथ दृगयनं हा !! सुमंत्रो निवृत्तः ॥२२॥
ग्रामीणानामथ रघुवरौ मैथिलीं चाऽध्वनीनाः
पश्यंतीनां कुवलयदृशां प्रेमपीयूषपूर्णाः ॥
वाचोऽन्योन्यं ललितवचसां तत्रतत्रोदभूव-
"न्नेष स्यात्कः सखि ! नवघनश्यामलोयोऽग्रयायी॥२३॥
तन्वी केयं तमनु तडितोरोचिरुद्धासयन्ती
स्यादन्यस्तां पुनरनुसरन्कोऽयमेकांतगौरः ॥
गच्छंतीमे विपिनपदवीं पादचारेण कस्मा-
दास्माकीनं कथमतितमामेव चेतोहरंति ॥ २४ ॥
अग्रे योऽयं व्रजति स पुनः पद्मपत्राऽऽयताक्षो
व्यूढोरस्कः कुटिलचिकुरोजानुलंबिप्रवेष्टः ॥
लक्ष्मारण्यस्य प्रसभमपि नः स्वांतमाह्लादयंते
वेषोनाऽयं सुखयति मनस्तापसानां प्रियोयः ॥२५॥
स्वक्तामेषां किमु न पितरौ प्रस्थिता वर्त्तमाना
यत्कैशोरे वयसि विपिनं गंतुमेकाकिनोऽमी ॥

दृष्ट्वैवेदं शृणु सखि ! मनः खेदमेति प्रकामं
बालानेनानहह !! पितरौ संत्यजेतां कथं नु ॥२६॥
उत्कंठेयं खलु सुमहती वक्तुमेभिः सहैका
गोत्रज्ञानं नहि कथमिमानालि ! संबोधयामः ॥
एभ्योऽस्माकं लपितमगुणं हन्त !! रोचेत नो वा
संभाषेरन्यदि कथमपि स्याम सर्वाःकृतार्थाः ॥२७॥
किन्नामाऽसीदपि च सुकृतं पूर्वजन्माऽर्जितं नो
मूर्त्तीः प्रेमाऽमृतरसमयीर्येन पश्याम एषाम् ॥
स्यादत्यन्तं न किमु निखिलादिंद्रियाऽर्थान्निवृत्तो
नैनान्मन्ये सखि ! पुनरिह त्यक्तुमीशीत धीमान्॥२८॥
अन्यंच्चेदं शृणु सखि ! मतं चेतसा भावितं मे
निःशेषाणामपि हि जगतां निश्चितं तत्त्वमेते ॥
मोहाऽऽक्रान्ताः किल कतिपयेत्वन्यथा वर्णयन्ते
येषामेते नयनसरणिं नैकदाऽपि प्रपन्नाः ॥ २६ ॥
श्रेयः शिष्टं यदिह किमपि प्राक्तनं नो वयस्ये !
यच्चाऽऽजन्मप्रभृति गुरवः सेविताः पार्वती च ॥
मा तेनैते क्षणमपि दृशोर्यासिषुर्विप्रकृष्टं
मा च त्याक्षुःकथमपिच नः स्वीयदास्ये नियोक्तुम्॥३०॥
किं वा कुर्मोदुरितमुदितं रुष्टमस्मासु दि
संसेवन्ते सखि ! चरणयोर्हन्त !! चांचल्यमद्य ॥

संभाषन्ते किमपि वदनाऽऽलोकिनोऽन्योऽन्यमेते
हा ! हा !! कष्टं किसलयकृतादासनादुच्चलन्ति ॥३१॥
नेत्राऽऽल्हादं बहु विदधते पृष्ठतोऽपीक्ष्यमाणाः
सौन्दर्यं न प्रकृतिरुचिराँस्त्यक्तुमीष्टे कुतोऽपि ॥
तेजोभेदादनुमितवपुःपिण्डमात्रान्विदूरा-
त्तान्गृह्णीतोन खलु नयने आकृतीनां विशेषैः ॥३२॥
भूयस्तेषां क्व सखि ! तनवोलोचनाऽग्रे भवेयु-
र्धन्याऽसि त्वं धरणि ! चरणैरंकिता या तदीयैः॥
पादावग्रे न सखि ! चलतोहन्त !! किंवा विदग्ध-
श्चेतः सर्वेन्द्रियपरिवृढं नीतवन्तस्त एव ॥ ३३ ॥
अस्मत्प्रेम्णा कृतमिह पुनर्यात वेश्मानि धामो
निष्कृत्यूहं स्वजिगमिषितं ते च संप्राप्य देशम् ॥
प्रत्यायान्तु त्वरितमसुनैवाऽध्वना संनिवृत्य
प्रीतोनित्यं भवतु भगवानेषु चन्द्राऽर्द्धचूडः" ॥३४॥
नीत्वा रामोवनतरुतले कृच्छ्रतोरात्रिमेकां
सत्सँल्लापैः सुखमथ भरद्वाजमुन्याश्रमेऽन्याम् ॥
शिष्यैः प्रातस्तपनतनयां तारितः सन्महर्षेः
पश्यन्प्रीत्या विपिनसुषमां चित्रकूटं प्रपेदे ॥ ३५॥
तत्राऽवात्सीद्रचितरमणीयोटजे शैलदेशे
साकं प्राचेतसमुनिमते सीतया लक्ष्मणेन ॥

धाम्ना रामोविदधदुरुणा स्वेन साधूनसाधू-
नेकेनैव व्यपगतभयान्साध्वसव्याकुलाँश्च ॥३६॥
रामप्रत्यागमनपरया तृष्णया रुद्ध्यमाना-
न्प्राणांश्छेत्स्यन्निव नरपतेः प्राप मन्त्री त्वयोध्याम् ॥
श्रुत्वा वृत्तं निजसुतगतं पंचकादप्यसूना-
मेकं स्नेहं समधिकतमं भूमिपालोऽप्यमँस्त ॥३७॥
तत्याजाऽसून्स किल सततं रामरामेतिजल्प-
न्कौसल्यातु व्यलप–"दसवः किं न मे निःसरन्ति ॥
नष्टं राज्यं, वनमुपगतश्चीरवासाः सभार्यः
पुत्रः, स्वर्गं पतिरपि ययौ, शिष्टमस्तीह किं मे" ॥३८॥
वृद्धाऽमात्यास्तदनु भरतं मातृबंध्वालयस्थं
दूतैः प्रायः कृतकहसितैः शीघ्रमानीनयन्त ॥
अन्त्यामिष्टिं विधिवदुचितां पैतृकीं सोऽपि कृत्वा
मातुः कृत्याऽनलसुविकलो रामगंगामुपेतः ॥३९॥
रामः श्रुत्वापितुरुपरतिं चित्रकूटाऽद्रिसंस्थो
बाष्पक्लिन्नाऽऽननसरसिजस्तं मुहूर्त्तं शुशोच ॥
वासिष्ठीभिर्वचनततिभिर्वारिताधिप्रकारः
शुद्धे स्नातः पयसि विहितं तन्निवापं चकार ॥४०॥
स्मारंस्मारं स किल भरतोमातृकृत्यं कठोरं
सिंचन्पादौ नयनसलिलैरग्रजस्याऽत्यरोदीत् ॥

नाथ ! क्वेदं क्षितिपतिपदं सर्वथैव त्वदर्हं
काऽहं तु त्वच्चरणरजसां मार्जने योजनीयः ॥४१॥
मातुः स्मृत्वा खलु कुटिलतां दीनमेतन्मदीयं
दृष्ट्वा वक्त्रं रघुवर ! परां स्वीकुरुष्वाऽनुकंपाम् ॥
गच्छाम्येष प्रमुदितमनाः साऽनुजोऽरण्यभूमी-
मध्यास्येत स्वमथ भवता तातसिंहाऽऽसनं तत् ॥४२॥
नैवाऽशक्नोदपि विलपितैरग्रजस्याऽन्तरङ्गं
प्रत्याक्रष्टुं स किल करुणैस्तस्य चाऽसुप्रियोऽपि ॥
शेषोऽकाले त्यजतु धरणीधारणं वा कदाचि-
द्रामस्योक्त्था वदनकमलादुक्तयो न स्खलन्ति ॥४३॥
भाषाबंधादथ दृढतमादेव विश्वस्तचित्तो
बिभ्रन्मूर्ध्ना स विनिववृते पादुके रामदत्ते ॥
ताभ्यामाज्ञां व्यधित च विधीनर्चिताभ्यां गृहीत्वा
नन्दिग्रामं पुनरधिवसन्कान्तसिंहाऽऽसनाभ्याम् ४४
भूमीशायी संयमनियमो वन्यभोजी जटावा-
न्कंथाधारी सततमखिलादिन्द्रियाऽर्थाद्विरिक्तः ॥
रामे चेतोदधदपि गिरा रामरामेति जल्प-
न्कृच्छ्रान्निन्ये समयमवधेः कर्म कुर्वंस्तदर्थम् ॥४५॥
आसन्नत्वाद्भरतपुनरयानशंकैकहेतुं
कृत्वा शून्यां व्यथितहरिणां चित्रकूटस्थलीं ताम् ॥

रामस्त्वेकां तमलमकरोदाश्रमं पुण्यमत्रे-
रात्रिं रात्रिंचरकुलरिपुः सूरतः सत्समाजे ॥ ४६ ॥
अत्रिः प्रीत्या खलु परमया पूजयामास वन्यै
रामं रामाऽनुजमपि फलैः कंदमूलैः सपुष्पैः ॥
प्रेम्णा दिव्याऽऽभरणवसनैः शाश्वतैरङ्गरागैः
पातिव्रत्यं समुपदिशती मैथिलीं चाऽनसूया ॥४७॥
इति श्रीरामचरितामृते दधिशमीये द्वितीयः सर्गः ॥२॥

## तृतीयः सर्गः ।

प्रातः स्नातः स मुनिबटुकैर्दर्शिताऽरण्यमार्गो
नावा तार्यामपि च सरितं तारितः कांचिदेकाम् ॥
वामे पाणौ धनुरधिगुणं दक्षिणे बाणमेकं
बिभ्रद्बद्धेषुधिरथ ययौ रामचन्द्रोवनायं ॥ १ ॥
रक्षोवर्गाऽऽक्रमणपरयोस्तन्वतोः साधुरक्षा-
मग्रे पश्चादपि विचलतोर्धन्विनोर्दाशरथ्योः ॥
मध्ये यान्ती चकितहरिणीप्रेक्षणा मैथिली सा
मायेवाऽऽद्या पथि विरुरुचे ब्रह्मजीवाऽन्तरस्था ॥२॥
मार्गप्राप्ते सरसि विकसद्वारिजे स्वादु तोयं
पीत्वा छायां वनविटपिनस्तान्सुखं सेवमानान् ॥
घोरः क्रव्यादतिपरुषया भर्त्सयामास वाचा
"कौस्थः केयं भणत विपिनं प्राप्तवन्तः किमर्थम्" ॥३॥

त्यक्त्वा तन्वीं मनुजतनुजौ ! मा चिरं यातमेनां
कुर्वे नोचेत्कवलमुभयोरेकमेव क्षुधाऽऽर्त्तः ॥
किं जानाथे नहि सुररिपुं मां विराधाऽभिधानं
यस्मात् त्रासाद्वनमिदमरं त्यक्तवन्तो मुनीन्द्राः ॥४॥

दिव्यं रूपं सपदि जगृहे रामबाणप्रसादा-
द्देवं रूक्षाण्यभिदधदपि क्रव्यभुग्भाषितानि ॥
नम्रश्चोचे स किल विलसन्मस्तकं देवमुक्तैः
पुष्पैरेनं "जय रघुपते ! कस्त्वदन्योदयालुः" ॥५॥
कोपादेतां गतिमुपगतोनाथ ! दुर्वाससोऽहं
त्वन्निर्देशादपिपुनरयं यामि लोकं स्वकीयम् ॥
देहि क्लेशत्रयविदलनं स्नेहमात्यंतिकं ते
तेनेत्थेवं समधिरुरुहे जल्पता व्योमयानम् ॥ ६ ॥

कश्चिद्योगी क्वचन शरभंगाऽभिधो राघवाय
प्रत्यर्प्य स्वं सुकृतमखिलं वीतिहोत्राय देहम् ॥
प्राप्तोदिव्यां गतिमपुनरावृत्तये, सज्जनेभ्यो
रामोदास्यन्नभयमपिचाऽगस्त्यशिष्याऽऽश्रमं सः॥७॥
लोपामुद्रापतिमृषिवरं द्रष्टुकामं सुतीक्ष्णः
स्तुत्या प्रीतं दशरथसुतं प्रांजलिः सन्नुवाच ।
कोलोभूयाननुपचरतो याति पादौ गुरोर्मे
कोनिर्देशोभवति भवतामाश्रमाऽध्वाऽप्यदृष्टः ॥

बालस्योक्त्या पितुरिव परामार्द्रतामाससाद
प्रेम्णोगृह्यं हृदयमनया जानकीनायकस्य॥
इत्थङ्कारं यदुपरि दया जायते राघवीया
ते जीव्यासुर्जगति न पुनः केवलं स्त्रीविधेयाः ॥९॥
जातः श्लाघ्यः कलशजनुषा संगमोराघवस्य
प्रेम्णः साक्षादिव तनुमतोमूर्तिभाजा शमेन॥
संल्लापोऽपि प्रकटितमहाऽऽनंदसंदोहदोह-
श्चुक्रीकुर्वन्व्यजयत तयोर्मुग्धपीयूषयूषम् ॥१०॥
रामोऽप्यासीदसुरदलनः शासनात्कुंभयोनेः
कंचित्कालं मुनिजनमुदे पंचवट्यां निवत्स्यन्।
शैलोत्तुंगः पथि विचलता तेन दृष्टोजटायुः
सख्यं ज्ञात्वा पितुरुपरतं रक्षितं तस्यचाऽऽयुः ॥११॥
त्यक्तश्रीकोगुरुवचनतः कन्दमूलानि भोक्ता
देहे चीरी शिरसि जटिलोबद्धतूणः सधन्वा॥
दुष्टद्वेष्टा सुजनसरलोहंसवंशाऽवतंसः
सीतायुक्तोऽनुजसहचरः पंचवट्यां विरेजे ॥१२॥
तत्रैकस्मिन्नहनि कुटिला रावणस्याऽनुजाता
रामं कामादुपगतवती दिव्यरूपं दधाना॥
पुंसंयोगे पुनरनुचिता लक्ष्मणस्याऽसियोगा-
द्दूती मृत्योरिव निववृते राक्षसान्भीषयन्ती॥ १३॥

रामभ्रातुस्त्वसिहुतवहे तां हुतश्रोत्रनासां
वीक्ष्य स्पर्द्धापरवशधियोयातुधानाः खराऽऽद्याः ॥
रामस्यैव ज्वलति विशिखैर्युद्धभूवेदिकायां
सद्योदेहानजुहवुरथो पावके चापनाम्नि ॥१४॥
लंकेशस्य त्रिभुवनजयोद्गूढदर्पस्य सैव
द्वारं मृत्योरिव विघटितां नासिकां दर्शयंती ॥
हस्ताऽऽधानं प्रति जनकजाकैतवे कालकूटे
रक्षोवंशक्षपणकुशले हेतुभूता बभूव ॥ १५ ॥
मारीचेनच्छलमृगवपुर्बिभ्रता हेमचित्रं
रामं रामाऽनुजमपि वने दूरमुत्सार्य पूर्वम् ॥
विक्रोशन्तीमथ दशमुखोरामरामेति सीतां
निन्ये लंकां विहगपतिना विघ्नितः सन्मुहूर्तम् ॥१६॥
कांताशून्यामनुजसहितः काननाऽन्तान्निवृत्तो
नष्टज्योत्स्नां रजनिमिव तां राघवः पर्णशालाम् ॥
दृष्ट्वा वाचा विकलहृदयोदीनया पर्यदेवी-
"त्सीते ! नेयं वसतिरधुना शोभते क्वाऽसि याता॥१७॥
राज्यभ्रंशात्पितुरुपरतेर्दंडकाऽरण्यवासा-
द्वन्याऽऽहारादजिनवसनाद्रक्षसां वा विमर्दात् ॥
स्वीयान्नैव च्युतमपि पथः स्वान्तमेतन्मदीयं
सीते ! धैर्यं त्यजति सहजं त्वद्वियोगादिदानीम् ॥१८॥

क्वाऽसि प्राणेश्वरि ! न विषमः सह्यतेऽयं वियोगो
वाक्पीयूषं वम मम लघु श्रोत्रयोरेकवारम् ॥
एतन्मत्ताऽन्यभृतवचने ! जीवितस्यौषधं मे
प्राणच्छेदश्रवणमितरत्सर्वमेवेह कांते ? ॥ १९ ॥
चंद्रश्चंडांऽशवति कदलीकल्पितं तल्पमेत-
त्कष्टं तप्ताऽयसति भुजगत्यर्पितैवोरसि स्रक् ॥
तप्तस्वर्णद्रवति तनुविन्यस्तकाश्मीरपंकः
सर्वेऽप्येते वनखगमृगाः प्रेतराट्किंकरन्ति ॥ २० ॥
नीता दुष्टैरपि वनचरैर्भक्षिता वा प्रिया मे
सौमित्रे ! तां क्व विधुवदनां लोचनाभ्यां पिबेयम् ॥
जानासि त्वं जनकतनयाऽधीनमेतन्मदायुः
कैकेयी सा भवतु भवने सर्वथा पूर्णकामा ॥ २१ ॥
घोरे घोरैर्वनचरकुलैः संकुले काननेऽस्मि-
न्वत्स ! ब्रूहि क्व नु जनकजा मार्गणीया कथं वा ।
एकोऽसि त्वं मम हतविधेः संकटेऽस्मिन्सहायो
वैदेहीं वा मृगयसि वने पासि मां वा विषण्णम्",॥२२॥
बभ्रामाऽथाऽखिलवनभुवः सोऽनुयोगक्रियायां
वाग्व्यापारं दधदविषमं चेतनाऽचेतनेषु ॥
तच्चेत्थं "हे चलदल ! वधूरीक्षिता कच्चिदेका
पीनोत्तुङ्गस्तनभरनता पक्वबिंबीफलोष्ठी ॥ २३ ॥

हे न्यग्रोध ! क्वचन भवता वीक्षिता प्रेयसी मे
मध्ये क्षीणा विपुलजघना याऽतिगंभीरनाभिः ॥
प्राप्ता रंभे ! किमिह सुदती राम ! हा !! लक्ष्मणेति
क्रोशन्त्येका वनभुवि तव स्तम्भसम्भावितोरुः ॥२४॥
कच्चित्काचित्प्रतिकृतिरिव स्वर्णनिष्पादिताङ्गी
दृष्टा रामा सरसिज ! भवत्पुष्पनीराजितांऽघ्रिः ॥
एका काचिद्युवतिरिह मत्स्वान्तमादाय कच्चि-
न्नाऽऽयाताहे हरिण ! चकितत्वत्प्रियाचंचलाक्षी॥२५॥
अप्यद्राक्षीर्भृशकृशतनुं नीलकण्ठ ! प्रियां मे
स्निग्धोयस्याश्चिकुरनिकरस्त्वत्कलापेन तुल्यः ॥
पूर्वेऽस्मिन्वाऽप्यहनि सुमुखी वर्त्मनैतेन काचिद्
हे कुन्द ! त्वन्मुकुलदशना कच्चिदेकाऽऽगतेति"॥२६॥
दृष्टस्तेन क्वचन विपिने भ्राम्यता लूनपक्षो
विद्धोबाणैर्बहलरुधिरक्लिन्नदेहोजटायुः ॥
पृष्टश्चेमां विहग ! विपदं केन नीतोऽसि, तेन
प्रत्युक्तं 'ते नृवर ! हरता प्रेयसीं रावणेन' ॥ २७ ॥
युध्यन्तं मां जनकतनुजाहेतवे निर्जितः प्रा-
ग्जित्वा पश्चादगमदसुरः सत्वरोदक्षिणाऽऽशाम् ॥
वक्तुं नाऽतः परमलमहं मैथिलीप्राणनाथे-
त्यावेद्याऽऽस्यादसृगुरु वमन्संस्थितोगृध्रराजः ॥२८॥

तस्याऽन्त्येष्टिः पितुरिव कृता रामचन्द्रेण, सोऽसौ
दिव्यैरङ्गैरुपरिददृशे व्योमनि व्योमयाने ॥
रामस्त्वन्यद्वनमुपगतोऽहन्कबन्धं, स शापा-
न्मुक्तोलोकं स्वकमुपययौ शापहेतुं निवेद्य ॥२६॥
प्रायासिष्टामथ नृपसुतावाश्रमं तौ शबर्या
हृष्टाऽत्यन्तं फलजलदलैरर्चयामास तौ सा ॥
वाचा विज्ञाप्य च मधुरया मैथिलीप्राप्त्युपायं
त्यक्त्वा देहं हरिपुरमगात्संनिधौ राघवस्य ॥३०॥

इति श्रीरामचरितामृते दधिशर्मीये
तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः

आसीत्सख्यं पितृवचनतस्त्यक्तसिंहाऽऽसनस्य
स्वीयां भार्यामथ मृगयतोभानुवंशाऽब्जभानोः ॥
ज्येष्ठभ्रात्राऽपहृतवनितावेश्मराज्येन साकं
सुग्रीवेणाऽनलपवनभूसाक्षिकं वानरेण ॥ १ ॥
तत्र प्रेष्ठाऽऽभरणवसनाऽऽश्लेषमासाद्य मित्रा-
दन्तस्तापं विरहजनितंत्वेक उज्झाञ्चकार ॥
वीताऽऽरातिव्यतिकरभयात्कीशसाम्राज्यमन्यः
सद्योऽन्योऽन्यं फलति हि सतां काङ्क्षितं मित्रभावः ॥२॥
गूढस्थित्या निजसखरिपुं वालिनं रामचन्द्रो

हत्वा सख्ये स मुदितमनाः कीशराज्यं च दत्वा ॥
प्रावृट्कालं गिरिवरदरीमध्यमध्यास्य सीतां
शोचन्मुंचन्नयनसलिलं यापयामास कृच्छ्रात् ॥३॥
सर्वं व्याप्य क्षितितलमगाद्दिक्षु सर्वासु सीता-
मन्विष्यन्ती वनगिरिदरीकुञ्जमुन्याश्रमेषु ॥
संख्यातीता दनुजदलनी वाहिनी वानराणां
मासं दत्त्वाऽवधिमथ रवेः सूनुना प्रेर्यमाणा ॥४॥
वायोःसूनौ निपतितवती रामदृष्टिर्दयाऽऽर्द्रा
वीरेष्वन्येष्वनुपमगुणेष्वप्यसंख्येषु सत्सु ॥
भूयोभूयः स च नयनयोरुद्वहन्नश्रुलेखे
मूर्ध्ना पादाऽम्बुरुहयुगले हृष्टरोमा पपात ॥५॥
ऋक्षाऽधीशोमघवजसुतोमारुतस्याऽऽत्मजोऽपी-
त्याद्यावीराःककुभि बहवोदक्षिणस्यां प्रयाताः ॥
तामप्राप्याऽर्यमकुलमणिप्रेयसीं ते विषेदु-
र्मध्याऽन्हाऽर्के तपति विपिने व्याकुला वारिणा च ॥६॥
अंभस्तृष्णाऽध्वविचलनयोस्तापसी श्रान्तिहर्त्री
तेषामासीद्धरणिविवराऽऽवासिनी काचिदेका ॥
तूर्णं तस्याअपि गुणसुधां पाययन्तः स्वराऽरे-
स्तृष्णां सर्वां भवपथगमंचोभयं चिच्छिदुस्ते ॥७॥
सिंधोस्तीरं सपदि च तया प्रापितास्ते कपीन्द्राः

गंतव्याऽध्वोपरमजभयादेवमन्योऽन्यमूचुः ॥
"हा !! गच्छाम क्व पुनरवनिप्रान्तमेव प्रपन्ना
नाऽयं गम्यः सरिदधिपतिर्हन्त !! शाखामृगाणाम् ॥८॥
नैव प्राप्ता भुवि रघुपतेर्वल्लभा हा !! क्व यामो
यातप्रायोऽवधिरपि गता जीविताऽऽशाऽस्मदीया" ॥
दीनोदीनां सजलनयनस्त्वंगदो वाचमूचे
"सत्यं दृष्टा मृतिरुभयथा मामकी हे सखायः ! ॥९॥
नेह प्राप्ता जनकतनया गेहयातं कपींद्रो
हन्ता छिद्रं समधिगतवानात्मजं विद्विषोमाम् ॥
हन्यादेव प्रसभमपि मां वालिघाते निवृत्ते
तत्र क्रूरात्सदयहृदयः कोसलेंद्रोजुगोप" ॥१०॥
जल्पत्स्वेवं कपिषु च गिरेर्गह्वरान्निःसृतः स-
न्संपाती तानवद-"दतुलं लब्धमाहारजातम् ॥
क्षुत्क्षामेण क्षपितमिह वै वासराणां कदम्बं
भर्त्रा मह्यं ननु तनुभृतामेकदैव प्रसन्नः" ॥११॥
श्रुत्वाऽशोचन्विलपितमिदं भीतिमूढाः प्लवङ्गा
हा !! हन्ताऽस्मान्गिलति सकलानेष नूनं सखायः ?॥
रामस्याऽर्थे तनुमुदसृजद्यः स धन्योजटायु-
र्दुष्टक्रव्यादुदरकुदरीपूर्तये नो वपूंषि ॥ १२ ॥
"भ्रातुर्वार्त्ता विपिननिलयाः ? श्राविता मे भवद्भि-

मत्तः प्राप्यत्वभयमखिलं ब्रूत वृत्तं तदीयम् ॥
किं वा कार्यं भवति भवतां स्यामहं तत्सहायो"
गृध्रस्योक्त्या जहृषुरनया वानराणां मनांसि ॥१३॥
तैस्तु भ्रातुः सकलमुदिते वानरेन्द्रैरुदन्ते
तेनाऽयंतं किल विलपता भूयएवाऽभ्यधायि ॥
"सिन्धोस्तीरं नयत लघु मा रामदूता ! विपन्नं
स्नात्वा दास्ये सतिलमुदकं मत्प्रियायाऽनुजाय"॥१४॥
नीतः कीशैर्जलनिधितटं स्नातवान्दत्ततोयो
हृष्टोवाचं सजलनयनोवानरेन्द्रानवोचत् ॥
"यूयं धन्या दशरथसुतं संततं सेवमाना-
स्त्रैलोक्येऽस्मिन्वरगुणगणैर्येन तुल्योन कोऽपि ॥१५॥
सा लंकायामुपवनतरोर्मूलदेशे सशोका
सीता भीता निवसति सती राक्षसीभिः परीता ॥
तां गृध्रत्वाद्धिटपिभवना ! दूरतोऽहं निरीक्षे
यस्तूत्प्लुत्य व्रजति च शतं योजनानां स पश्येत् ॥१६॥
दुःसाध्यं किं भवति भवतां सेवकानां खरारे-
रुद्भूतौ मे सपदि गरुतौ दर्शनादेव येषाम् ॥
प्लुष्टावास्तामरुणकिरणैःसन्निकृष्टस्य दर्पा"
दित्युक्त्वाऽगाद्धियति विहगोनूतनाभ्यां गरुद्भ्याम् १७
गृध्रे याते गिरिनिभतनून्वालिपुत्रः कपीन्द्रा-

"नूचे वीरा ! भणत जलधिं लंघितुं कः समर्थः" ॥
तस्य श्रुत्वा वचनमथ ते वानराः सर्व ऊचुः
स्वं स्वं वीर्यं परतटगमं कोऽपि नाऽङ्गीचकार ॥१८॥
खिद्यत्स्वान्तः पुनरभिदधे निश्वशन्वालिसूनुः
पारं गंतास्म्यपि तु पुनरावर्तनेऽहं सशंकः ॥
न त्वं प्रेष्यः प्रभुरपि च नो जाम्बवाँस्तं बभाषे
वृद्धोऽहंप्राग्बलमिह न मे वत्स ! किं ते वदामि ॥१९॥
"कस्मात्तूष्णीमसि पवनज ! त्वं समर्थोऽब्धिपारं
गंतुं रामाज्जनगतिविदोमुद्रिकामाददानः" ॥
एतां श्रुत्वा पवनतनुजोवाचमृत्ताऽधिपाऽऽस्या-
द्भूयोभूयः प्रलयघनवद्भीममुच्चैर्जगर्ज. ॥ २० ॥
"कर्तव्यं मे वद किमधुना जाम्बवन्" ! गच्छ लंकां
सीतां दृष्ट्वा पवनतनुज ! क्षिप्रमागच्छ भूयः ॥
हत्वा रामः सकुलमधमं रावणं क्षोणिजातां
तामानीय स्वयमिह यशोऽव्यातनिष्यत्यपूर्वम् ॥२१॥

इतिश्री रामचरितामृते दधिरामीये
चतुर्थः सर्गः ॥ ४ ॥

## पंचमः सर्गः

रामस्यांऽघ्रिद्वयमथ मनस्यद्वयं संदधानः
संसाराऽब्धेः स्मृतमपि सकृच्छोषकं सेवकानाम् ॥

स क्षाराऽब्धिशतपरिमितं योजनानां ततार
प्लुत्वाऽऽकाशे स्वजनकइव प्राप्तदेहोहनूमान् ॥१॥
ज्ञप्तिस्तस्य त्रिदशकृतया मायया नैव लुप्ता
चेतोलुब्धं स्वयमुपनते नेन्द्रियाऽर्थे पुरस्तात् ॥
शक्तिःक्षीणा न खलदलनी सत्यपि प्राणबाधे
वायोर्वेगाद्धियति पततोवीरवाय्वात्मजस्य ॥२॥
विद्वद्वृन्दैर्विरचितनुतिर्वाक्पथाद्दूरभिन्नः
प्रेमाऽऽयत्तः स किल महिमा रामनाम्नोह्यचिन्त्यः ॥
वैपक्षी यद्विगलितमहाविग्रहा विग्रहाऽऽढ्या
पूरेवाऽभूत्पवनजनुषः साऽऽग्रहा साह्यदाने ॥३॥
श्रीरस्वप्नैः प्रतिगृहगता स्वप्नकालेऽप्यलभ्या
दृष्टा नक्तं यदपि चरता तेन नक्तंचरस्य ॥
सीताशोकाऽनलकवलितेतीषदप्याहृता नो
कस्य स्थैर्यं परमृगदृशः स्प्रष्टुरर्थैरलंभि ॥४॥
दृष्टा देवी परिमृगयता शिंशपावृक्षमूले
राम! प्राणप्रिय ! रघुवरेत्येतदेवाऽऽलपन्ती ॥
लोकाऽतीतद्युतिरतिकृशा केशसंस्कारहीना
दीर्घश्वासा मलिनवसना ह्यंजनानंदनेन ॥५॥
धृत्वा देहं विलसति किमु ब्रह्मविद्यैव साक्षा-
दाहोस्वित्स्वीकृतशुभतनुर्वैष्णवी भक्तिरेषा ॥

साध्वीतायाः किमियमथवा मूर्तिरेवाऽद्वितीये-
त्यूहाञ्चक्रे जनकतनुजामीक्षमाणोहनूमान् ॥ ६ ॥
सूक्ष्मं कृत्वा वपुरतितरां वृक्षपत्रेषु लीनो
यावत्पश्यत्यवनितनुजां सस्पृहं वातजातः ॥
तावत्प्राप्तोविविधवनितावृन्दयुक्तोदशास्यः
साध्वीं दुष्टः स किल चटुभिः सान्त्वयिष्यन्वचोभिः॥७॥
ध्यानप्राप्ते रमणचरणेऽधोमुखीं दत्तचित्तां
वैदेहीं तां स दशवदनोऽवोचदेकान्तनम्रः ॥
"कल्याणि ! त्वं हठपरवशा दुर्लभं लब्धमेत-
त्यक्तुं नाऽर्हस्यमरनिकरप्रार्थ्यमैश्वर्यमद्य ॥ ८ ॥
वीर्यं लोकत्रितयविदितं नश्रुतं वा मदीयं
शक्राद्या मे सुमुखि ! विबुधाः संति पानीयवाहाः ॥
सोऽहं पादौ दशभिरपि ते मौलिभिः संस्पृशेयं
दृष्ट्या नीलोत्पलदलरुचा पश्य मामेकवारम् ॥९॥
त्वामेवाऽद्यप्रभृति तु सुरीवृंदशुश्रूषणीयाः
शुश्रूषन्तां समैथतनया या महिष्यो मदीयाः" ॥
देव्याश्चेतोविकृतिमभजन्नाऽनया रावणोक्त्या
दध्नः क्षीरोदधिगतपयः स्वल्पया विप्रुषेव ॥ १० ॥
एकं किंचित्तृणमथ सती त्वन्तरे सन्निधायाऽ-
ऽवोचद् "वक्तुं मनसि न मनाङ्मन्द! मन्दाक्षमस्ति ॥

शून्यां दृष्ट्वा वसतिमसतामग्रणीर्मामहार्षीः
खद्योत ! स्यान्न गतिरियती रामभान्वग्रतस्ते" ॥११॥
हन्तुं सीतां तदनु कृपणोराक्षसेंद्रः कृपाणं
जग्राहोग्रं निशितमधिकक्रोधरक्ताऽक्षिमालः ॥
मन्दोदर्या सुकृतपरया पादयुग्मे पतन्त्या
तद्व्यापारादविहिततमाद्वारितः सन्निवृत्तः ॥१२॥
मासाभ्यां मच्छयनमियमायातु रे यातुधान्यो !
देया शिक्षा किल कुमतये नित्यमेतादृशी वः ॥
नो चेद्भोक्ष्ये शतशकलितं मांसमस्याः प्रतप्ते
तैले भृष्ट्वेत्यभिहितवता तेन जग्मे निकेतः ॥१३॥
राक्षस्यस्ता अपि जनकजां भर्त्सयन्त्योऽद्युरेव
स्यादेकाऽऽसां यदि न जरती स्वप्नवृत्तान्तवक्री ॥
जीवेत्सा किं दशमुखवचःशूलनिर्भिन्नमर्मा
दद्यादग्निं यदि च बहुशः प्रार्थिता सैव वृद्धा ॥१४॥
जातेऽत्यन्तं रघुवरसती साऽपि निर्मक्षिके वै
वेणीभूतैश्चिकुरनिकरैः कण्ठमुद्बध्य मृत्युम् ॥
इच्छन्ती स्वं नमयति पुरा वृक्षशाखां भुजाभ्यां
तावत्कर्णाऽमृतरसनिभां वाचमूचे हनूमान् ॥१५॥
"भानोर्वंशे भुवि दशरथोनाम साकेतपुर्यां
भूभृद्भूभृन्मुकुटमणिनिर्घृष्टपादो बभूव ॥

अग्रे दृष्ट्वा यमतिरभसादर्द्धभागं बिडौजा
लोकाध्यक्षैर्विनुतमजहादात्मसिंहाऽऽसनस्य ॥ १६ ॥
तस्याऽभूवँस्तिसृषु महिषीष्वात्मजाश्चात्मवन्त-
श्चत्वारः श्रीरमणसदृशा रामचन्द्रप्रधानाः ॥
तेषु ज्येष्ठः पितृवचनतः कांतया चाऽनुजेन
प्राप्तोऽरण्यं त्रिदशनिकरप्रार्थ्यमुत्सृज्य राज्यम् ॥१७॥
तत्राऽहार्षीदुपधिविधिना रावणः क्षोणिजां तां
धर्त्तुं रामे कनकहरिणं काननाऽन्तं प्रयाते ॥
तां संमार्गन्गिरिमुपगतस्त्वृष्यमूकाऽभिधानं
सख्यं चक्रे स कपिपतिना तत्र सुग्रीवनाम्ना ॥१८॥
हत्वैकेनाऽर्पयदसुलभं कीशराज्यं स सख्ये
किष्किंधायामवृषपरमं वालिनं चाऽऽशुगेन ॥
सर्वास्वाशास्वतुलितबलान्वानरान्वानरेन्द्रः
शैलाऽऽकारान्स तु समहिनोज्ज्ञानकीमार्गणाय ॥१९॥
तेष्वेकोऽहं सततगमनादञ्जनायां प्रजातो
मुख्यो मन्त्री कपिकुलपतेः किङ्करो राघवस्य ॥
तीर्त्वा सिंधुं दशमुखपुरीमागतो मैथिलीं ता-
मेतां पश्यन्नयनयुगलेनाऽद्य धन्योऽस्मि जातः" ॥२०॥
आकर्ण्यैतां वचनरचनामभ्यधान्मैथिली सा
"नाऽयं स्वप्नोऽर्हति हि भवितुं नाऽस्ति निद्रा यतोमे ॥

नेयं भ्रांतिर्विषयिविषये यद्यथार्थोपलब्धि-
र्मायेयं स्यादपि मम मनोमोहिनी राक्षसानाम् ॥२१॥
वक्ता योहि प्रियतमगिरामग्रतः सैष भूत्वा
भूयश्चेतोज्वरसुशमनीं वाक्सुधां पाययेत ॥
विश्वासोमे हृदि दृढतमोयेन जायेत, तापा-
न्निष्पित्सन्नप्ययमसुगणोयेन रुद्धेयत देहे ॥२२॥
वाचोऽन्तेऽस्यास्त्ववनिरुहतो भूमिपीठेऽवतीर्णो
लब्धाकारः स कपिशकपिः प्राञ्जलिर्लोहिताऽऽस्यः ॥
पञ्चश्लोकीं श्रवणसुखदां तामनूद्योक्तपूर्वां
नत्वा साऽश्रुः सपुलकवपुर्मुद्रिकामार्पयत्ताम् ॥२३॥
प्रीतिर्याहृश्यभवदवनेशात्मजायास्तदानीं
पश्यन्त्यास्तां करकिसलये नित्यदृष्टां प्रियस्य ॥
तां हृद्येवाऽन्वभवदपि सा जानकी नाऽलमासी-
द्वक्तुं व्यक्तं वचननिचयैरत्र कोऽन्यः समर्थः ॥२४॥
आनन्दं तं निगिलितवतः संशयस्याऽपनोदं
कर्त्तुं देव्याः शपथमकरोज्ज्ञानवानाञ्जनेयः ॥
सत्यं सत्यं खलु रघुपतेर्देवि ! दूतोऽस्मिनाऽन्यो
नेयं शङ्का भवतु भवतीमानसे मां विलोक्य ॥२५॥
अप्राक्षीत्सा रमणचरणक्षेममाश्वस्तचित्ता
"कच्चिद्भ्रात्रा सह स कुशली जीवितेशोमदीयः ॥

दुर्भाग्यायाः स्मरति मम वा क्वाऽपि वत्स ! प्रसङ्गे
किञ्चाऽऽगन्तुं पवनज! वदाऽऽलम्ब्यते किं विलम्बः ॥२६॥
एतादृश्यामिह मम कपे ! दुर्दशायां त्वमासी-
स्त्राता कायाद्विरहविधुराद्गत्वराणामसूनाम् ॥
काकुत्स्थस्य त्वमसि परमप्रीतिविस्रंभपात्रं
शक्या कर्त्तुं भवदुपकृतेर्नाऽऽयुषा निष्कृतिर्मे ॥२७॥
तस्य स्वान्तं तव तु विदितं वत्स ! दीने दयाऽऽर्द्रं
कोऽयं हेतुर्यदिह मृदुतामत्यजत्सांप्रतं ताम् ॥
आपन्नानां चरणशरणं चेतसैवाऽऽर्तिभाजां
भावग्राही प्रभुरनुचितं नेक्षते दोषजातम् ॥२८॥
सोढव्यां मे वद विपदियं हन्त !! कालं कियन्तं
कल्पप्रायोभवति समयो योनिमेषप्रमाणः ॥
किञ्चिन्न्यूनः पुनरतिगतोवत्सरोवत्स ! रोदि-
म्यद्यैवेमामधिगतवती प्रेयसस्त्वत्प्रवृत्तिम् ॥२६॥
का वा कार्या प्लवग ! हृदये निष्फला जीवनाऽऽशा-
पश्य प्राप्ता वलयपदवीमंगुलेरूर्मिकेयम् ॥
राक्षस्योऽपि क्रकचरसना भिन्नकांस्याऽऽरवा मा-
मास्यैः फालप्रतिमदशनैर्निर्गिलन्तीव नित्यम् ॥३०॥
तैलभ्रष्टं पिशितमशितुं दुर्मुखोऽपि प्रतिज्ञां
कृत्वा यातः कथमिदमहं जीवितं धारयेयम्”

एवङ्कारं जनकदुहितुर्व्याहरन्त्यास्तदानीं
वाणी सद्योगलबिलगतैरश्रुभीरुद्ध्यते स्म ॥३१॥

तां प्राऽवोचत्स बहु विनतोधीरमाश्वासयिष्य-
न्कञ्चित्कालं जननि ! गमयेर्लोचने मीलयित्वा ॥
स स्वामी ते सह कपिबलैः शीघ्रमागत्य लङ्कां
जित्वाऽसंख्यैरतुलितबलै रावणं नेष्यति त्वाम्॥३२॥

कार्यं किंवा गुरु रघुपतेस्त्वत्प्रवृत्तेरलाभा-
देतावन्तं जननि ! समयं यस्तु जातोविलम्बः ॥
रामस्यैकः कपिरपि कृपामात्रमासाद्य सद्यो
लङ्कां जेष्यत्यथ तु मिलिताः किं पुनः सर्व एव ३३॥

"पश्यामि त्वां चटकवपुषं त्वादृशाएव सर्वे
यद्येवं तं सुरविजयिनं तर्कये नो जयेत" ॥
इत्युक्ते तु क्षितितनुभुवा मारुतिर्मेरुभूया-
न्भूत्वा भूयोऽभवदतितरां सूक्ष्मकायस्तदुक्त्या ॥३४॥

चूडापाशस्थितमथमणिं प्रत्यभिज्ञानिमित्तं
दत्त्वा चोक्त्वा सजलनयना पद्मिचारार्थकवृत्तम् ॥
वैदेही सा व्यसृजदनिलस्याऽऽत्मजं सोऽपि नत्वा
धैर्यं मातः ! कमपि समयं धारयेति प्रतस्थे ॥३५॥

दृष्टोजग्ध्वा स फलनिकरं रक्षकान्मुष्टिपातै-
र्निघ्नन्भञ्जन्नुपवनतरून्राक्षसीभिर्वनौकाः ॥

रक्षोमाया मम न विदिता पृष्टया सीतयेति
प्रत्युक्ताभिः सभयममराऽऽरातिरावेदितश्च ॥३६॥
लंकेशेन प्रहितमवधीद्राक्षसाऽनीकमेकः
क्षुण्णाऽमात्यप्रभृति हनुमान्भूरि भूस्थं भ्रमन्खे ॥
बध्वा पश्चाद्बलरिपुजिता ब्रह्मपाशेन नीतः
पौलस्त्यायाऽऽयतिशुभफलां भारतीमादिदेश ॥३७॥
स क्रोधाऽग्निज्वलितहृदयोऽजिज्वलद्वायुसूनो-
स्तैलाऽऽज्याक्तैरसितसृतिना लूममावेष्ट्य चैलैः ॥
दग्ध्वा लङ्कां स लघुगमनस्तेन वैश्वानरेण
प्रत्यावृत्तः स्वधनिसविधंभूय आपृच्छ्य सीताम् ॥३८॥
स्वप्रेयस्याश्चिरविरहवान्राघवोमौलिरत्नं
पश्यन्नासीन्नयनयुगलादश्रुधाराऽभिवर्षी ॥
रोमोद्भेदान्वपुषि निदधे पाणिनाऽप्याददानो
हृद्यारोप्यत्वशकदपि न ज्ञातुमात्मानमेव ॥३९॥
सीतोदन्तश्रवणमनु तं मारुतिं रामचन्द्रो
विस्तीर्णेनाऽतिशयमुरसा पीडयन्नालिलिङ्ग ॥
हे सर्वस्वप्रद ! कृतनतौ जन्तुमात्रे निसर्ग-
द्राम ! स्वामि ! जय जय जयेत्यूचुरुच्चैः कपीन्द्राः ॥४०॥

इतिश्रीरामचरितामृते दधिरामीये
पञ्चमः सर्गः ॥५॥

## षष्ठः सर्गः

सेना कैशी दिनकरसुतस्याऽऽज्ञया दक्षिणाऽऽशा-
मुद्दिश्याऽथ व्यचलदचलां साऽचलां चालयन्ती ॥
रामः श्रीमाञ्जयति जयति श्रीसुमित्राऽत्मजन्मा
राजाऽस्माकं जयति बलवानेवमुद्भाषमाणा ॥ १ ॥
तावारूढौ कनकवपुषोरञ्जनावालिसून्वोः
स्कन्धावुच्चैर्दशरथसुतौ नीलगौरौ तनुभ्याम् ॥
संरेजाते भृशपरिणतौ पुष्टिमन्तौ मनोज्ञौ
जम्बूचूताविव सुरगिरेः शृङ्गयोर्वर्त्तमानौ ॥ २ ॥
आशोल्लासं हरिहयपुरोगामिनां दिक्पतीनां
संतन्वानोजडपरिभवं कुर्वता स्वेन धाम्ना ॥
क्रान्तस्कन्धोदयगिरितटोवायुसूनोस्तदानीं
रक्षोध्वान्तप्रशमनकरोरामभानूरराज ॥ ३ ॥
कीशव्यूहः सततविचलल्लूमभालोत्तरंगो
हस्तौघेन द्रुममहिधरव्रातमुत्पाटयन्सः ॥
गच्छन्वेगादुदधिमभितं दक्षिणस्थं चकाशे
कल्पस्याऽन्ते जलनिधिरिवोदीच्य उत्क्रान्तवेलः ॥४॥
सेनामेनां दशमुखरिपुः सन्निवेश्याऽब्धिकूले
नाऽऽप स्वास्थ्यं जलधितरणोपायचिन्ताऽऽकुलाऽत्मा॥
यस्य स्मृत्वा सकृदपि जना नाम संशोषयन्ते

संसाराऽब्धिं स नरचरितं नाटयामास कार्यात् ॥५॥
लङ्केशस्त्वन्तकपरवशो मन्त्रिणां दुर्मतीनां
मन्त्रे तिष्ठन्ननुजममलप्रज्ञमज्ञोऽभ्यभूत्सः ॥
सोऽपित्यक्त्वा तमधर्ममिमं राममेव प्रपन्नः
कोऽन्योरामादगतिकगतिर्हन्त !! लोकत्रयेऽपि ॥६॥
स स्वीचक्रे दनुजदमनोराघवः केवलं न
ज्ञात्वा शत्रोरनुजमपि तं चेतसा कोमलेन ॥
तर्ह्येवाऽस्मै व्यतरदपि तल्लङ्काविलङ्काऽऽधिपत्यं
रामादन्यः प्रभुरिह विना कारणं कोदयालुः ॥७॥
अन्तर्यन्तुः सकलजगतां रामचन्द्रः स भक्त्या
नाम्ना स्वेन त्रिपुरमथनस्याऽर्च्यमभ्यर्च्य लिङ्गम् ॥
बाणत्रासान्नमति बहुलैरात्मसंभूतरत्नैः
सेतुं सिन्धौ व्यरचयदथो विश्वकर्माऽऽत्मजेन ॥८॥
तेनैवाऽब्धिं प्रतिभयचलन्नक्रचक्रप्रकीर्णं
तीर्णोऽगाधं रघुपतिकृपाभाजनं कीशसंघः ॥
कामक्रोधादिभिरनुगतं मोहगंभीरतोयं
कालव्यालं भवजलनिधिं रामनाम्नेव लोकः ॥९॥
श्रुत्वा दूतादपि रघुपतेर्वीर्यमेकान्तमुग्रं
नह्यत्याक्षीत्स हठमधमोराक्षसानामधीशः ॥
कश्चित्क्वाऽपि प्रभवतु महीमण्डलस्याऽप्रवृत्ताः

विच्छां कोवाऽन्यथयितुमहो !! राघवीयां समर्थः॥१०॥
आयत्यां तत्क्षणमपि हितं रामवीर्योपपन्नं
स्नेहादुक्तं मयतनुजया पूतया भर्तृभक्त्या ॥
सद्वाक्यं नाऽरुचदनुपमं राक्षसेन्द्राय तस्मै
पथ्यं दिव्यौषधमिव महत्कालरोगक्षताय ॥ ११ ॥
धातुः प्राप्तं वरमसुलभं मन्त्रिषु श्रावयन्स्वं
जन्यं मेने किल हिततरं स्वीयदौर्जन्यजन्यम् ॥
उच्चैरूचे गिरमपि हसन्, "यस्य कोदण्डनादा-
त्संत्रस्यन्ति त्रिदिवपतयस्तस्य भीः कीशनृभ्यः ॥१२॥
सज्जीकृत्य व्रजतु पृतनां मा भवान्सूर्द्धहस्तो
धृष्टन्दृष्ट्वा युधि कपिगणान्क्षिप्रहस्त ! प्रहस्त ! ॥
गच्छ त्वं च त्वरितमहितांस्त्रासयद्भिः कठोरै-
र्द्यावाभूम्यौ स्वरथनिनदैर्नादयन्मेघनाद ! ॥ १३ ॥
देहोनाऽकम्पन ! कपिरणे कम्पनीयस्तवाऽयं
स्मृत्वाऽऽत्मीयं बलमपि सुरव्यूहनिर्भेददक्षम् ॥
नाराचानां ततिभिरधुना कीशकाया महान्त-
श्छेत्तव्यास्ते रणभुवि बलेनाऽतिकाय ! क्षणेन॥१४॥
येऽप्यन्ये मे त्रिदशरिपवोवाहिनीं मण्डयन्तो
मुख्याऽमुख्या व्रजत चपलं योद्धुमद्यैव सर्वे ॥
आयातोऽयं सकिल समयस्तुन्दिलानां भटानां

यत्र ग्रासान्सममसुभिरप्युद्गिलन्ति स्वभर्तुः ॥ १५ ॥
यस्तु प्राणानवति समये पीदृशे, पास्यति द्रा-
क्तस्याऽयं मे गलबिलगलद्रक्तमुष्णं कृपाणः ॥
आदिश्यैवं किल समितये सैनिकान्मन्दबुद्धिः
कालव्यालाऽऽननबिलगतोऽप्याविशत्स्वं निशान्तम् १६
चापप्रासस्वधितिपरिघाऽऽद्यायुधैर्यातुधानै-
र्युद्धं शैलाऽवनिरुहदृषद्गण्डशैलाऽऽयुधानाम् ॥
निस्तेजस्कैरपहृतपरस्त्रीकसङ्गेन घोरं
कीशानां श्रीरघुवरकृपाजातधाम्नां बभूव ॥ १७ ॥
केचित्प्रापुः किल शलभतां मारुतिक्रोधवन्हा-
वन्ये क्ष्माया रजसि मिलिता वालिभूमुष्टिघातैः ॥
वृक्षैःशैलैरपि कतिपये जाम्बवद्धस्तमुक्तै-
र्निर्भिन्नाङ्गाः कतिचन शरैर्लक्ष्मणाऽस्तैर्विदीर्णाः॥१८॥
कीशैरन्यैर्बलिभिरितरे पातिता युद्धमूर्ध्नि
क्रोधाऽऽक्रान्तैः प्रखरनखरै रेव वक्षोविदारम् ॥
एवं सर्वे त्वरितमगमन्कौणपास्तामवस्थां
रामद्रोहादिह निरगदाज्जन्तवोयां व्रजन्ति ॥१६॥ युग्मं
मासैरासीदहरविरतस्वापसङ्गादबुद्धे-
रोबोद्धव्यं खलु कतिपयैरेकमारातितुल्यम् ॥
रामेषूणां तदपि विभवादग्रजाऽनुग्रहाऽऽप्ता

दज्ञांतव्यं पुनरतितरां कुम्भकर्णस्य जातम् ॥ २० ॥
दर्पश्चित्ते प्रभवतु न किं जेतुरिन्द्रस्य पूर्वं
किन्त्वेकोऽयं रणभुवि तदा विस्मयोऽभूदसीमः ॥

बध्वा पाशैर्विषधरमयै रावणिर्यन्नृबाला-
वालोकिष्ट त्रिभुवनमिदं नैकबालप्रमाणम् ॥ २१ ॥
चिन्वन्भार्यामलभत वने भूतिरक्षः सहाया-
न्स्वस्तिर्यञ्च भुजगनिवहच्छेदकं बन्धनस्थः ॥
रामः कस्यांचिदपि विपदि प्राप भङ्गं न कंचि-
त्किं वा न स्यादिह सुकृतिनां कार्यकाले सहायः॥२२॥

सङ्गं बाणैरधिगतवतोलक्ष्मणस्येन्द्रजेतुः
शुद्धैश्चापाच्छ्रुतिपथगतज्याविनम्राद्विमुक्तैः ॥
साऽहङ्कारं बपुरथ महाभूतसंघातभूतं
स्वौन्नत्यात्तत्क्षणमिह निजे कारणौघे विलीनम् ॥२३॥

मन्त्रिभ्रात्राऽऽत्मजसखिमुखे दह्यमाने स्वपक्षे
हेतिच्छद्मन्यग्निविरचिताऽवार्यकृत्याकृशानौ ॥
क्रोधादन्धैः स खलु नयनैरावणोरामभेवा-
ऽपश्यद्रक्तैर्द्विगुणदशभिस्तत्र भूयोविपक्षम् ॥२४॥

१ एकरोमसमानं स्वस्यानन्यसाधारणकार्यकृत्त्वाभिमानात् । अन्यत्र एकराजकुमारप्रमाणं, तस्य चतुष्पाद्ब्रह्मरूपत्वात्, चतुर्षु पादेषुमध्ये एकस्मिन्नेव पादेऽनंतकोटिब्रह्मांडोत्पादश्रुतेः ॥

रामाऽग्रे स्म प्रलपति खलोबह्ववद्धं निबद्धो
याम्यैः पाशैरपि स, "हृदयेनिष्फलस्तावदास्ताम् ॥
दर्पोद्रेको, विशिखनिकरस्तापसस्य प्रचण्डो
थोवन्नो मे निपतति जगज्जेतुरीशं श्रितस्य ॥ २५ ॥
काऽहं शक्रप्रभृतिविबुधक्षोभणप्राप्तकीर्त्तिः
काऽकिञ्चन्यं जनकजनितं लब्धवाँस्तापसोऽयम् ॥
सिंहस्याऽग्रे मृगशिशुरिव स्वाऽऽत्मनाशाय वल्ग-
न्नायातोमे रणभुवि पुरोमानवोऽयं वराकः ॥२६।
यं वै चित्तेवहसि वधतोरक्षसां क्षुल्लकानां
संतिष्ठेत क्षणमपि न ते मत्पुरः सोऽभिमानः ॥
कःकैलासोद्वहनविदितान्मामकान्बाहुदण्डा-
न्दृष्ट्वा तु स्याद्वनगृह! पुनर्धीरचेतास्त्रिलोक्याम्॥२७॥
हा! हा!! हन्ताऽद्भुतममहो!! यःशिरोभिः स्वकीयैः
प्रीत्या छिन्नैः स्वयमिह भवं तोषयामास देवम् ॥
निःशङ्कोऽयं मनुजतनुजोविद्यते युद्धभूमौ
तस्यैवाऽग्रे सुरगणरिपोरक्षसामीश्वरस्य" ॥ २८ ॥
श्रुत्वा वाचं दशमुखमुखादुद्गतां रामचन्द्रो
न प्रावोचत्किमपि परुषं सागराऽगाधचेताः ॥
मर्माविद्भिश्चपलकथितैर्बिन्दुभिर्मेघमुक्तैः
सन्तः शैला इव न वचनैः स्वस्थितिं हि त्यजन्ति॥२९॥

स्मित्वा किञ्चित्प्रकृतिमधुरां वाचमाचष्ट रामो
"रे पौलस्त्य ! प्रलपसि वृथा नेक्षसे कालमग्रे ॥
शून्याऽऽवासात्तव हृतवतो योषितं वै परस्य
श्लाघाऽऽत्मीया न खलु रसनां शोभते गाहमाना" ॥३०॥
रामस्योक्तौ प्रमितवचसो यातवत्यां विरामं
मन्युस्तंत्वानखशिखमथो राक्षसेन्द्रं सिषेवे ॥
पाणौ बाणाऽसनमुरुतरं सोऽपि, तत्राऽपि कोट्यां
मौर्वीं, साऽप्याशुगसमुदयं, सोऽप्यसंख्यत्वमाजौ, ॥३१॥
न व्योम्न्येवालभत वितता भानुमाच्छादयन्ती
बाणश्रेणी खलु शलभतां राक्षसेन्द्रेण मुक्ता ॥
किन्त्वेकस्मिन्दिनकरकुलांऽभोजभास्वत्प्रयुक्ते
रोपव्याजेऽप्यसितसरणौ तीक्ष्णताकीलभाजि ॥३२॥
युध्यत्युच्चैर्दशशतखराऽलङ्कृतस्यन्दनस्थे
भूमिष्ठत्वं परमनुचितं रावणे राघवस्य ।
मन्वानः स्वं किल हरिहयो दिव्यवाहोपपन्नं
भासाऽप्याशा रथमथ दश द्योतयन्तं जिघाय ॥३३॥
तस्मिन्नारोहति बलरिपोर्यानमिक्ष्वाकुनाथे
दारान्पुत्रान्वपुरपि न ते सस्मरुर्वानरेन्द्राः ॥
रोम्णामञ्चान्वपुषि दधतः किञ्च सर्वेऽप्यकस्मा-
द्रामः स्वामी जयति जयतीत्येकदैवोदवोचन् ॥३४॥

सीताजानिर्दिनकरकराऽऽकारमारुह्य यानं
सौनाशीरं जवनमवनः साधुवृन्दारकाणाम् ॥
आसीद्गाढं स किल समरे राक्षसानामसह्य-
स्तेजीयस्त्वाद्दिनमणिरिव त्र्यम्बकोवा वृषस्थः ॥३५॥
नानाशस्त्रप्रहरणमभूद्युद्धमेकान्तघोरं
श्रीरामस्याऽप्यथ दशमुखस्याऽपि सीतानिमित्तम् ॥
तत्तत्कालेऽप्यधिकयशसा वर्ण्यमानं कवीनां
वृन्देनाऽद्याऽवधि च लभते यत्स्वमेवोपमानम् ॥३६॥
दोषज्ञानां गुरुकरुणया वश्यवाग्देवतानां
दूरान्मुक्तं वचनविभवाद्रामपौलस्त्ययुद्धम् ॥
स्तावंस्तावं खलु खलनरान्त्रासहेतोरशुद्धीः
संचिन्वाना स्पृशतु च कथं भारती मे वराकी ॥३७॥
रामेणेष्वा निशिततरया छिन्नमास्यप्रवेष्टं
भूयोभूयोऽभवदभिनवं रक्षसामीश्वरस्य ॥
प्रायश्चित्तैः परिहृतमपि त्र्यम्बकस्याऽभिधानं
चेतःशुद्धेर्दुरितमिव नो मन्यमानस्य मूलम् ॥ ३८ ॥
नैवाऽश्नन्मदनमथनाल्लब्धपूर्वोवरस्तं
नो पीयूषं सुचिरनिहितं नाभिकुण्डे स्वकीये ॥
रामे साधूनवितुमनघौ मानवत्वं प्रयाते
क्रुद्धे तावद्भवतु शरणं कोहि लोकत्रयेऽस्मिन् ॥३९॥

ध्यायं ध्यायं गुरुगणपतीशानमातापितॄणा-
मंघ्रीन्भक्त्या रघुकुलमणिर्बाणमेकं व्यमुञ्चत् ॥
भित्त्वा वक्षः स च दशमुखं पातयित्वा रसायां
तूणीरान्तर्न्यविशत पुनर्नन्दयन्देववृन्दम् ॥ ४० ॥
पौलस्त्यारेः शिरसि विशदा वासयन्ती दिगन्ता-
न्मुक्ता देवैरथ सुमनसां वृष्टिरिष्टा पपात ॥
याता वृद्धिं सपदि भुवनेषु स्वशादिष्वमान्ती
छिद्रस्वर्गान्सुखवसतये गन्तुकामेव कीर्तिः ॥ ४१ ॥
तदनु कलकलोऽभूद्व्योमनि व्योमयाने-
ष्वमरपरिवृढानां संकुलस्तुर्यनादैः ॥
"जय रघुवर ! रक्षोध्वान्तविध्वंसभानो !
जय विबुधचकोरव्रातपीयूषरश्मे" ! ॥ ४२ ॥
ननृतुरप्सरसः सहसारम्भाज्जगुरतीव कलं सुरगायनाः ॥
अविरतंदिविदुन्दुभयोऽनदन्निपतितेभुविविश्रवसःसुते४३
तनवःपुलकाञ्चिताःस्वयंपतितालोचनतोऽम्बुसन्ततिः॥
हतपङ्क्तिमुखं वनौकसां रघुनाथं परिपश्यतांतदा॥४४॥
कृत्वा बिभीषणमधीश्वरमस्त्रपाणा-
मन्त्यक्रियां दशमुखस्य विधाप्य तेन ॥
सीतां ददर्श स चिराद्विरहेण खिन्नां
स्वर्भानुना कवलितामिव चन्द्रलेखाम् ॥ ४५ ॥

आदिष्टो रघुपतिना सुराऽधिनाथः
पीयूषं किल समराऽवनौ ववर्ष ॥
कीशौघाःसपदि ततः समुत्थितास्ते
रक्षोभिर्युधि विगताऽसवः कृता ये ॥ ४६ ॥
सूतं विसृज्य सरथं विबुधाऽधिपस्य
संभावयन्ननुजराक्षसवानरेन्द्रान् ॥
अंके निधाय दयितामनले विशुद्धां
प्रत्याययौ स नगरीमथ पुष्पकेण ॥ ४७ ॥
दिनानि साकेतनिवासिनीनां
भाग्यैः प्रजानां परिवर्तितानि ॥
तथाहि शेषेऽवधिवासयामे
श्रीरामचन्द्रः पुरमाजगाम ॥ ४८ ॥
क्षतत्वचौ दण्डककण्टकौघै
रामस्य पादौ जटिलेन मूर्ध्ना ॥
उदश्रुनेत्रःपुलकाऽऽचिताऽङ्गो
जग्राह वेगाद्भरतो महात्मा ॥ ४९ ॥
उत्थाप्य दोर्भ्यामुरसा रसेन
रामोऽनुजन्मानमुपाऽऽददानः ॥
सीतावियोगाऽऽदि न मानसेन
सस्मार किञ्चिद्वनवासकृच्छ्रम् ॥ ५० ॥

उवाच रामं भरतः कृताऽञ्जलि-
स्ततः शनैरेव विनम्रकन्धरः ॥
" प्रभो ! तवांऽघ्रिस्मरणाददपालयं
प्रजावतीं स्वामिव राजसम्पदम् ॥ ५१ ॥

अतः परं नाथ ! तवांऽघ्रिसेवी
नेष्ये युगंचाऽपि निमेषमानम् ॥
अनेषि कृच्छ्रेण युगीभवन्तं
विना भवन्तं तु निमेषमेव " ॥ ५२ ॥

आकर्ण्य रामो भरतस्य वाचं
पितेव पुत्रस्य चिरप्रवासी ॥
वक्तुं न किञ्चित्प्रतिवाक्यमेकं
बाष्पैर्गलांऽतर्गलितैःशशाक ॥ ५३ ॥

अथ कुलगुरुमुख्यैःकल्पितं बाडवेन्द्रैः
समुचितमभिषेकं राज सिंहाऽऽसनस्थः ॥
चतुरुदधिसमुत्थैर्मंत्रपूतैः पयोभिः
सह जनकदुहित्रा सोऽग्रहीद्रामचन्द्रः ॥ ५४ ॥

इतिश्रीरामचरितामृते दधिरामीये
षष्ठः सर्गः ॥ ६ ॥

# सप्तमः सर्गः ।

क्रान्तसिंहाऽऽसनं रामं पौलस्त्यवधशोभिनम् ॥
माध्वीकमाधुरीधुर्यैर्वचनैःकवयोऽस्तुवन् ॥ १ ॥
सहसा प्रविविद्मामोराम ! ते नामतेजसा ॥
विनाऽपि प्रतिभापोतं त्वद्यशःक्षीरनीरधिम् ॥ २ ॥
त्वन्नामनौकयाऽल्पोऽपि पारं याति भवाऽम्बुधेः ॥
तरीतुं साधनाऽभावाच्शक्यो न त्वद्गुणाऽम्बुधिः॥३॥
श्यामबालोभवान्राम ? वयं पलितबालकाः ॥
क्षन्तव्या भवतस्तस्माद्स्मद्वाचामनौचिती ॥ ४ ॥
प्रीतोभव नवा राम ! वयं तु त्वद्गुणाऽर्णवे ॥
निमज्जन्तोन पश्यामस्त्वां गुणाद्दूरतः स्थितम् ॥५॥
अकिञ्चनप्रियोऽसि त्वं बुधानामिति वाङ्मुधा ॥
संचीयते नामरत्नं हृत्कोशे त्वत्प्रियैः सदा ॥ ६ ॥
न गृह्णीमोवयं मुक्तिं, मुक्तिः किं नः प्रयच्छतु ॥
मुक्तेः कोटिगुणोत्कृष्टां पिबद्भ्यस्त्वत्कथासुधाम् ॥७॥
त्यक्त्वा भवन्तं रामाऽन्तर्यन्तारं नाऽऽद्रियामहे ॥
क्लेशान्पश्यति हृत्स्थोऽयं हन्ति दूरात्स्मृतोभवान् ॥८॥
दोषं गुणं वाऽप्युदरे गोपितुं नोत्सहेमहि ॥
नीतिरेषा महाराज ! "स्पष्टवक्ता सुखी भवेत्" ॥ ९ ॥
अनन्यशरणं भक्तं दारैः पुत्रैर्धनैरपि ॥

कियोज्य भिक्षुकं कर्तुस्तव केयं दयालुता ॥ १० ॥
कथाऽऽसवप्रमत्तस्य स्वभक्तस्य शनैःशनैः ॥
हन्त !! निर्दयता राम ! सर्वस्वं हरतस्तव ॥ ११ ॥
दीनानां बालपुत्राणां दाराणां पश्यतां गृहात् ॥
प्रव्रजन्ति जटाजूटं बध्वा त्वन्नामचिन्तकाः ॥१२॥
दानवोत्सवहन्तेति स्तूयसे कविभिर्वृथा ॥
सदानवोत्सवैवेयं पृथिवी राजनि त्वयि ॥ १३ ॥
अश्विनी दयया त्वांद्री पुनर्वसुसमन्विता ॥
नक्षत्रजातिरेवेयं सर्वाऽपि जनता तव ॥ १४ ॥
महीमहेन्द्र ! देवेन्द्रोगोत्रभित्पाकशासनः ॥
दुष्टशासनएवाऽसि त्वं पुनर्गोत्ररक्षकः ॥ १५ ॥
धर्मेणैव महाराज ! धरणीं शासति त्वयि ॥
सदंभाःसरितां राजिर्न वर्णाऽऽश्रमिणो नराः ॥१६॥
नीत्या शास्त्रोक्तयाऽपित्वं पालयन्सकलाःप्रजाः ॥
अनीतिमेव काकुत्स्थ ! कुरुषे सागराऽम्बराम् ॥१७॥
इदानीमसि राजेन्द्र ! श्रीपतिश्चतुराऽऽननः ॥

१ सदा नूतनोत्सवा । दानवानामुत्सवैःसहिताच । २ अश्वयुता, तन्नामकनक्षत्रं च । ३ कोमला । पक्षे पूर्ववत् । ४ पुनः धनसमन्विता । पक्षे पूर्ववत् । ५ क्षत्रजातिरेव न, प. नक्षत्रजातिः । ६ गोत्राःपर्वताः । गोत्रंकुलंच । ७ पाको दैत्यविशेषः, पाकाः शिशवश्च । ८ दंभेनसहिताः । सज्जलाच । ९ नीतिरहिताम् । ईतिरहितांच । १० धनवान् । विष्णुश्च । ११ चतुरमुखो, ब्रह्माच ।

अन्तेऽपिनाकी भविता भवानिक्ष्वाकुनन्दन ! ॥१८॥
लङ्कामुपेत्य कपिभिरेकं पुण्यजनं घ्नता ॥
सर्वेऽपि मानवा राम ! त्वया पुण्यंजनीकृताः ॥१९॥
वैरिणो जिष्णुरेवाऽसि दुष्टे दण्डधरः सदा ।
धनदोऽर्थिनि राजेन्द्र ! प्रचेताः कार्यसाधने ॥२०॥
बहुविद्याधरयुता धरा विलसदप्सराः ।
त्वया नाथेन काकुत्स्थ ! नन्दनत्वमुपागता ॥२१॥
प्रतापतपनस्तेऽयं कीदृग्यस्योदये नृप ! ॥
दारान्पुत्रान्धनं किंचिन्न हि पश्यन्ति शत्रवः ॥२२॥
हतौ द्वौ विश्रवःपुत्रौ त्वया, ताभ्यां हतास्त्रयः ।
मृताभ्यामपि राजेन्द्र ! दंभमानमदास्तव ॥ २३ ॥
एकपत्नीव्रतोऽस्मीति कत्थनं शोभते न ते ॥
दृश्यते तव राजेन्द्र ! नारीणां वशवर्तिता ॥ २४ ॥
सत्स्नेहः सुदशोभासा भासयन्भारताऽऽलयम् ।
कुलदीपोऽसि काकुत्स्थ ! तमःसंहारतत्परः ॥२५॥

१ अन्ते अपिनाकी स्वर्गी । अन्ते पिनाकी श्रीशिवश्च २ राक्षसाः, पुण्यवंतोजनाश्च। ३ जयशील, इन्द्रश्च। ४ शासको,यमश्च । ५ धनदाता, कुबेरश्च । ६ प्रकृष्टचेता वरुणश्च । ७ बहुभिर्विद्याधरैर्देवजातिविशेषैर्बहूनां विद्यानांधारकैश्च युता । ८ विलसंत्यआपोयेषुतथाभूतानि सरांसि यस्यामिति । विलसंत्योऽप्सरसोयस्यामितिच । ९ नारीणां, न अरीणां। १० विद्यमानघृतादिः। पक्षे सन्स्नेहो यस्य सत्सुस्नेहोयस्येति वा। ११ शोभनवर्त्तिकः सदवस्थश्च। १२ अंधकारः, गुणश्च।

क्षो[1]भेऽप्यभिन्न[2]स्थितिको न[3]दीनो वा[4]डवाऽऽश्रयः ॥
कला[5]वद्वृद्धिवर्धिष्णुः पारावरो भवानपि ॥ २६ ॥
शोभायै किल काकुत्स्थ ! सेना ते चतुरङ्गिणी ॥
धनुर्द्वितीयः सकलान्रणे जयसि वैरिणः ॥ २७ ॥
आत्मौपम्येन सर्वांस्त्वमविरुद्धान्प्रपश्यसि ॥
यतश्चारविचाराभ्यां कार्यसिद्धिं समीहसे ॥२८॥
राम ! त्वं तेजसा भा[6]स्वान्वदनेन क[7]लाधरः ॥
कर्म[8]णा मङ्गलोनित्यं सौ[9]म्योऽसि द्विषतामपि ॥२९॥
गु[10]रुरेव नरेन्द्राणां दैत्यानां मा[11]नदः क[12]विः ॥
किं पुनर्म[13]न्दतामेकां त्यक्तवानसि राघव ! ॥३०॥ युग्मं
अरयः सन्ति न क्वाऽपि रामस्येति वचोमृषा ॥
सदा[14]नवारयोनागा द्वारे द्वारे विशां तव ॥ ३१ ॥
एकपत्नीव्रतस्याऽपि दीक्षितस्याऽध्वरेषु ते ॥
राम ! स्वर्णमयी सीता प्रतिज्ञां साधु भेत्स्यति ॥३२॥
स्वस्मिन्नेव दृढं बद्धा गुण[15]जालैः प्रजास्त्वया ॥

---

१ महावातादिनासंचलनेपि, प-चित्तविकृतावपि । २ अनतिक्रांतवेलः । अनुल्लंघितलोकशास्त्रमर्यादश्च । ३ नदीनामीनो, न दीनश्च ४ एतन्नामकाग्न्याश्रयो, ब्राह्मणाश्रयश्च ५ कलावान् चंद्रः, कलावंतोविद्वांसश्च, ६ प्रकाशमानः, सूर्यश्च ७ चतुःषष्टिकलाधारकः, चंद्रश्च, ८ कल्याणो, भूमिपुत्रश्च, ९ सुभगो, बुधश्च १० उपदेष्टा, बृहस्पतिश्च, ११ मानप्रदः, मानखंडनश्च, १२ क्रांतदर्शी, भार्गवश्च, १३ अज्ञत्वं, शनैश्चरत्वंच १४ मदजलसहिताः, प.,सदा नवीनाः शत्रवः १५ दयादाक्षिरायादिगुणसमूहैः, रज्जूनामानायैश्च ।

दिवमेको गमिष्यामीत्याशाऽपि न गरीयसी ॥३३॥
त्वदीयानां गजेन्द्राणामपि ते दानवारिभिः॥
पिच्छिले भूतले क्वाऽपि वयं गन्तुं न शक्नुमः ॥३४॥
कार्यं भाग्यवतां गेहे वसतामेव सिद्ध्यति॥
गता यशस्तवाऽऽदाय दिशामन्तेषु शत्रवः ॥३५॥
भग्नदर्पो न कन्दर्पः केवलं रूपसंपदा॥
अनन्यसाधारणया जितेन्द्रियतयाऽपि ते ॥३६॥
संतापयति चण्डांऽशुरुद्यन्नेव खरैः करैः[2]॥
वृषस्थोमधुरै राम ! त्वमाल्हादयसि प्रजाः ॥३७॥
चतुर्षु किल मासेषु जलं वर्षति वासवः॥
त्वमर्थिषु धनं राम ! मासेषु द्वादशस्वपि ॥३८॥
प्रत्याययतु कोवक्तु कश्चेदं महदद्भुतम्॥
महीयस्ते यशोमाति स्वल्पे ब्रह्माण्डकोटरे ॥३९॥
यज्ञयूपैः पदन्न्यासस्थलं न सरयूतटे॥
स्नानसन्ध्यातर्पणानि क्व राजन् ! विदधीमहि॥४०॥
मारं जयसि रूपेण कुमारं राम ! तेजसा॥
सनत्कुमारं ज्ञानेन धुन्धुमारं बलेन तु॥ ४१॥
अलिनोमलिना राम ! मल्लाः किल गदाऽन्विताः॥

१ मदजलै, द्रव्यत्यागविधिजलैश्च, २ अंशुभिः, राजग्राह्यद्रव्यैश्च ३ वृषराशिस्थो धर्मस्थश्च। ४ श्यामाः, पापिनश्च, ५ गदाः, आयुधविशेषारोगाश्च।

त्वदीयराज्ये सततं समदा[1]स्तु मतङ्गजाः ॥ ४२ ॥
नयनानां सहस्रेण यन्न पश्यति वासवः ॥
द्वाभ्यामेव हि नेत्राभ्यां तत्त्वं पश्यसि राघव ?॥४३॥
गृहोदन्तं न जानासि किं नस्त्वं साधयिष्यसि ॥
कीर्तिं कान्तां तवाऽऽदाय प्लायन्ते परिपन्थिनः॥४४॥
स्वयं कि[2]मप्यकुर्वन्तं सेवितव्यं वनौ[3]कसाम् ॥
गु[4]णहीनं गुहा[5]ऽऽवासं केचित्त्वां जानतेऽ[6]बुधाः ॥४५॥
राम ! त्वद्यशसा सर्वं जगत्क्षीराऽर्णवीकृतम् ॥
विकचेन्दीवरश्यामस्त्वमेवैको विराजसे[7] ॥४६॥
सचेत[8]नस्त्वमेवाऽऽसि सर्वाः प्रकृत[9]यस्त्विमाः ॥
देव[10] ! त्वत्संश्रयादेव समर्थाः कार्य[11]साधने ॥ ४७ ॥
मुनि[12]वृन्दसमायुक्ता विवस्व[13]त्सन्ततिस्त्वया ॥
जडौघा[14]द्रक्षिता राम ! वेदमा[15]र्गाऽनुसारिणा ॥४८॥

---

१ मदोदानजलं चित्तविकारविशेषश्च, २ निर्गुणब्रह्मरूपत्वात्स्वयंकिमप्यकुर्वंतं किंतुप्रकृतिद्वारैवजगत्सृष्ट्यादिकुर्वंतं, प, अशक्तत्वात्स्वयंकिमप्यकुर्वंतं किंतु परप्रार्थनयैव ३ मुनीनां, वानराणांच ४ निर्गुणं शुद्धब्रह्मत्वादनुद्योगित्वाच्च ५ बुद्धिगुहा पर्वतकंदराच ६ केचिदनेकजन्मपुण्यसंचयेनक्षीणकर्मबंधनास्त्वत्कृपापात्रभूताविद्वांसः एतद्विपरीता अबुधाश्च ७ क्षीरसागरशयनः स्निग्धश्यामवर्णस्त्वमेवेति कविः शृणोति । ८ सप्रसिद्धश्चेतनश्चिद्रूपः, प. सबुद्धिः ९ प्रधानादयोऽमात्यादयश्च १० हे स्वयंप्रकाश ! प. हे महाराज ! ११ जगत्सृष्ट्यादौ राजकार्ये च १२ सप्तर्षयोदंडकारण्यवासिमुनयश्च १३ सूर्यवंशोवैवस्वतमनुश्च १४ जडराक्षससमूहात् प्रलयकालिकसमुद्रजलप्रवाहाच्च १५ वेदमार्गः श्रुतिपथोवेदान्वेषणं च ।

समुद्धरन्ति सर्वेऽपि रागवन्तं जनं नृपाः ॥
उदधार्षीर्मन्दरागमपि त्वं तु नरोत्तम ! ॥ ४९ ॥
पुरातनैः सत्कविभिः स्तूयमानस्य साऽऽदरम् ॥
गोत्रोद्धारप्रयत्नोऽपि युज्यते भवतः प्रभो ! ॥ ५० ॥
अदिथाः शात्रवायाऽपि प्रणताय श्रियं पराम् ॥
नरसिंह ! पतन्तिस्म स्तब्धाः क्रोधाऽनले तव ॥५१॥
क्रमात्समेधमानेन बलिभूपालबंधने ॥
राम ! त्वया कृते जाता जगत्यां तु वृषोन्नतिः ॥५२॥
हन्त ! त्वया महीपाल ! भजता भूमिदेवताम् ॥
अनेकवारान्दुष्टानां भूभुजां विहितोवधः ॥५३॥
पुराऽसि मुनिवेषस्त्वमिदानी राजवेषभाक् ॥
चिकीर्षितं न जानीमस्तव स्वेच्छाविहारिणः ॥५४॥
एकदैवाऽधुना सर्वे निहताः परिपन्थिनः ॥

१ प्रेमहीनं मन्दराचलंच २ ब्रह्मसनकादिभिर्वृद्धैःकविभिश्च ३ महीमंडलोद्धरणं, कुलोद्धारश्च ४ शत्रुपुत्रायप्रह्लादाय, शत्रुसंबंधिनेविभीषणायच ५ हेनरश्रेष्ठ !, प. हे नृसिंहावतार ! ६ हिरण्यकशिप्वादयो, रावणादयश्च ७ पादविक्षेपेणपरिपाट्याच ८ बलिनाम्नोदानवराजस्य, बलवंतां राज्ञांच ९ त्रिलोक्यां, भूमौच १० इन्द्रसमृद्धिः, धर्मवृद्धिश्च । ११ भावेतल् ब्राह्मणत्वं परशुरामावतारे प., ब्राह्मणान् जातावेकवचनम् १२ एकविंशतिवारान्, प. बहुवारान् १३ पूर्वजन्मनि, वनवासकालेच १४ अस्मिञ्जन्मनि, वनादागमनानंतरंच १५ भक्तेच्छाविहरणशीलस्यपरमेश्वरत्वस्महाराजत्वात्स्वच्छंदचारिणश्च ।

अतःपरं महाराज ! भवान्कंसंहनिष्यति ॥ ५५ ॥
विज्ञानी करुणाशाली जितदर्पकदर्पकः ॥
तथागतोभवानेव स्तूयते गौतमाऽऽदिभिः ॥ ५६ ॥
करवालोन वै तृप्तः शत्रूणां रक्तपानतः ॥
स्वीकर्तव्यः पुनरपि विग्रहस्ते कलावतः ॥ ५७ ॥
दृश्यन्ते परा राम ! विभूतीनां विसृष्टिषु ॥
संख्यावन्तोमहान्तोऽपि तत्संख्यायां तु नत्तमाः॥५८॥
राजन् ! विपुलशीर्षाणां नागानामधिपोभवान् ॥
दधाति धरणीं नाऽन्यं शेषं जानीमहे वयम् ॥५९॥
सदा सुराप्रियोवीरः शूरवंशसमुद्भवः ॥
खरहानन्दमापन्नस्त्वमेव रघुनन्दन ! ॥ ६० ॥
वाचामशक्तिरेवेयमस्माकं रघुनन्दन ! ॥

१ रिपूणामभावात्कं संहनिष्यति प. कंसं हनिष्यति कृष्णावतारे २ क्षणिकविज्ञानात्मवादी अपरोक्षात्मानुभववाँश्च ३ हिंसानिषेधपरत्वात्स्वभावाच्च ४ बुद्धः एवंभूतश्च ५ शाक्यमुन्यादिभिः, अहल्यापत्यादिभिश्च ६ युद्धं वपुश्च ७ असिकलाप्रवीणस्य. प. अतः कलौ ८ दशसंख्याका एव मुख्याः प. ग्रहाणांदशा एवोत्कृष्टाः ९ अवताराणां सर्गेषु प. ऐश्वर्याणांहानिषुवनवासकाले १० विद्वांसोगणितज्ञाश्च ११ अवताराणांगणने ग्रहदशागणिते च १२ अनेकशिरसां महाशिरसां च १३ गजानां भुजगानां च १४ वारुणीप्रियोऽसुराणामप्रियश्च १५ शौर्यवतां वंशे शूरनामकयादववंशेच १६ खरनामकराक्षसहंता गर्दभरूपधेनुकासुरहंताच १७ नंदनामकं गोपराजंपितृत्वेनशरणंगतः, महाराजाधिराजत्वेनाऽऽनन्दंप्राप्तश्च ।

यत्त्वदीयगुणौघानां वर्णनादुपरम्यते ॥ ६१ ॥
गुणास्तव प्रमेयाः किं राम ! तस्याऽपि, यः पुमान्॥
गणयेत्पार्थिवान्रेणूनेकशः सकलानपि ॥ ६२ ॥
इति सहृदयचेतोग्राहिणीभिः कवीना-
मपि भणितिभिरञ्चन्नीषदुल्लासमेकः ॥
विलसतु हृदयाऽन्तः सज्जनानामजस्रं
कलिकलुषकुठारो राघवीयः कपोलः ॥ ६३ ॥

इति श्रीरामचरितामृते दधिरामीये
सप्तमः सर्गः ॥ ७ ॥

॥ श्रीरामचन्द्रार्पणमस्तु ॥

वाल्मीकीयात्क्वमपि चरिताद्रामचंद्रस्य कंचिद्
व्यासप्रोक्तात्क्वमपि तुलसीदासगोस्वामिनोक्तात्॥
आदायाऽर्थं विरचितमपि ग्रन्थमल्पं स्वतुष्ट्यै
सद्भ्योऽप्येतं सपदि सदसद्व्यंजकेभ्योऽर्पयामि ॥१॥
स्वल्पाऽधीतिर्हिमगिरिवनग्रामके सन्निवासो
गोपैःसंगः सततमहिषीचारणं वर्तनं च ॥
एतत्सर्वं क्व खलु लघुतामूल, मेतत्क्व कर्म
च्छिन्नव्याजा शरणमिह मे सज्जनानां क्षमैका ॥२॥

समाप्तोऽयं रामायणसारः ॥

# शुद्धाशुद्धि पत्रम् ।

| अशुद्धं | शुद्धं | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| सनातन | सनातनं | १ | ४ |
| सुधाऽऽसारा | सुधाऽऽसार | ३ | १० |
| ह्याकृष्ट | ह्याकृष्टे | ७ | १६ |
| स्वमिहा | स्वयमिहा | ७ | १६ |
| जानानां | जानानानां | ८ | ४ |
| चेतोवृक्तिर्मे | चैतोवृत्तिर्मे | १७ | १६ |
| विद्र्मा | विद्रुमा | १८ | २ |
| कैकेप्यां | कैकेय्यां | २२ | ५ |
| निर्भर | निर्भर | २२ | १२ |
| देवर्नु | देवैर्नु | २२ | १५ |
| इन्द्रियाथः | इन्द्रियार्थैः | २३ | २ |
| रव | रेव | २४ | ७ |
| द्विषं | द्विष्टं | २७ | १६ |
| पीवा | पीत्वा | ३१ | १८ |
| घोरर्वं | घोरैर्वं | ३५ | १३ |
| वीर | वीरे | ३८ | ६ |
| हनमान | हनूमान् | ४३ | २ |
| तमधमिमं | तमधममिमं | ५१ | ४ |
| धृष्टन् | धृष्टान् | ५२ | ११ |
| कठोर | कठोरै | ५२ | १२ |
| भवन्त | भवन्तं | ६० | ७ |
| वक्तं | वक्तुं | ६० | ११ |
| प्रजावंतीं | प्रजावतीं | ६० | ४ |
| बाष्यर्ग | बाष्पैर्ग | ६० | १२ |
| रोद्धं | रोद्धुं | २५ | २० |

